॥ नञ्



श्रीमद्गदाधरविनिर्म्मित टीका-
यं श्रीमच्छिरोमणिसुधीरचितस्स
मेतः, नञ्वादसंज्ञकइनद्विगजक्ष्
पेशेशाके मधाववगते द्युमणौव
लक्षे। १।श्रीलोकनाथेन प्रकाशना
यप्रकाशितो गोरखनामयन्त्रे, वि
देहदेशालयकेन तर्कतर्केणकाश्यां
खलुमुद्रायित्वा २ ॥

शकः १८२१

॥ श्रीगणेशायनमः ॥

# ॥ अथ नञर्थवादः ॥



राधामुखाब्जमधुमत्त मधुव्रतश्रीकृष्णस्य पाद युगलं शिरसा प्रणम्य, नञ्वाद सङ्गत शिरोमणि गूढभावं श्रीमान् गदाधरसुधीर्विशदीकरोति ॥ यद्यपि साहृश्यादयः षडेवनञर्थाः तदुक्तं तत्साहृश्यमभाव श्चतदन्यत्वं तदल्पता, अप्राशस्त्यं बिरोधश्च नञर्थाः षट्[१] प्रकीर्त्तिता इति, तथापिलक्षणयैव साहृश्याद्यर्थप्रयोगनिर्व्वाहेतादृशार्थेशक्ति कल्पनमयुक्त मापितु अभावान्यत्व रूपार्थद्वय एव[२],सा

---

( १ ] नञर्थतावच्छेदकत्व समनियतषट्त्वा श्रयवन्तइत्यर्थ स्ते ननषञ्चसप्तेत्याद्यापत्ति. नञ साहृश्यादि बोधकत्वञ्चअनिक्षृ. स्र' अत्रघठोनअयघटोन अनुदरमुदरन्तरण्याः अब्राह्मणोवार्द्धुपिकः असुरादैत्य इत्यादौद्रष्टव्यं ॥ ( २ ) अभावत्वावच्छिन्ना न्योन्याभावच्छिन्नद्वयएवेत्यर्थः शक्तिकल्पन युक्तमितिशेष ॥

दृश्यत्वाद्य पेक्षया ऽभावस्य भेदत्वयोर्लघु तया तयोः प्रवृत्तिनिमित्तत्वे विनिगम कसत्वा[३] दि त्याशयेनाह संसर्गा भावइति,नञर्थः नञ्पद वाच्य,: संसर्गाभावे ऽभावत्वेनैवशक्तिः नतु तादात्म्याति रिक्तसम्बन्धा वच्छिन्न प्रतियो गिता का भावत्वरूप संसर्गा भावत्वेन, गौ रवात् तेनरूपेण बोधस्या नुभवासिद्ध त्वाच्च अतएवतत्सा दृश्यमभावश्चेति कारि कायां संसर्गा भावस्या भावत्वेनैवोपादानंनतु संस र्गा भावत्वेन नचसंयोगादि रूपसम्बन्धा व च्छिन्न प्रतियोगिताकत्वेना भावभानानुपगमे भूतलेनघटइत्यादिवा क्यजशाब्दस्य संयोगा दिसम्बन्धेन भूतलादौ घटादि बिशिष्ट बुद्धा वबिरोधितापत्तिः तत्सम्बन्धेन बिशिष्ट बुद्धौ तत्संसर्गावच्छिन्न प्रतियोगिताकत्वा वगाहि न्याएवा भावबुद्धेः प्रतिबन्धकत्वादितिवाच्यं निरुक्तसंसर्गा भावत्वेन शक्तावपितादात्म्या

---

( ३ ) लाघवमेवविनिगमक मितिभाव ॥

तिरिक्तसम्बन्धत्वे नानुगतरूपेणैव संसर्गाभा
वत्वशरीरे संयोगादी नान्निवेशान्नञ्पद श
क्यथाविशिष्यसंयोगादिसम्बन्धा वच्छिन्नप्रति
योगिताकत्वालाभात्ता दृशशाब्दबोधस्योक्तवि
शिष्टबुद्धिविरोधानुरो धेनाकाङ्क्षादि वशाद
वतादृशप्रतियोगिता कत्वस्यविशिष्यप्रतियो
ग्यभावयोः सम्बन्ध विधया भानस्योपगन्तव्य
त्वात्.भूतलनघट इत्यादिवाक्यज बोधेकदा
चित्संयोगा वच्छिन्न प्रति योगिता कत्वं
कदाचिच्च समवायाव च्छिन्न प्रतियोगिता
कत्वंभासत इत्यत्र तत्तत्सम्बन्धतात्पर्यमेव
नियामकं संयोगेन घटोनास्ती त्यादौसंयोगे-
नेत्यादि तृतीयान्तार्थः संयोगाद्यवच्छिन्नप्रति
योगिताकत्वं प्रकारतयापिभासते अथसंयोग
सम्बन्धावच्छिन्न घटत्वावच्छिन्ना भावस्य सम
वायावच्छिन्नघट संयोगाभाव समनियत त-
यातदभिन्नत्वेन कपालसमवायेन घटोनास्ती
ति प्रतीत्यापत्तिः नञ्तृतीयार्थो ऽवच्छिन्नत्व-
मेवतस्य चघटत्वावच्छिन्न प्रतियोगितायामन्व

यान्नातिप्रसंगः[४] इतिवाच्यं घटत्वावच्छिन्न प्रति योगितायाः संसर्गतया[५] तत्रपदार्थस्य[६] प्रकारतयाऽन्वयासम्भवादितिचेन्न तृतीयान्तार्थ समवायावच्छिन्न प्रतियोगिताकत्व घटपदार्थ घटत्वविशिष्ट योरेकविशिष्टेपरवैशिष्ट्य मितिन्यायेनाभावांशेऽन्वयबोधस्वीकारेणा नुपपत्ति विरहात्[७] अथाभावत्वस्यान्योन्या भावसाधारणस्य प्रवृत्तिनिमित्तत्वेऽन्योन्याभावपृथक् शक्तिकल्पनमनर्थकं नचान्योन्याभावत्व प्रकारक बोधानुरोधेन तत्रशक्त्यन्तर कल्पनमावश्यकमन्यथातादात्म्य सम्बन्धेन प्रतियोगि प्रकारकेऽयंघटइत्यादि बोधे,नायं घटइत्यादि वाक्यज बुद्धेर प्रतिबन्धकत्वा पातात् अन्योन्याभावत्वावगाहि बुद्धेरेव तथाविधबोध

---

( ४ ) प्रतियोगिताया भिन्नत्वादितिभावः ॥ ( ५ ) अपदार्थत्वेनेतिशेषः ॥ ( ६ ) अवच्छिन्नत्व रूपस्येत्यादिः ॥

( ७ ) अवच्छेद्यावच्छेदकभावेनान्वय बोधस्वीकारेण कपालवृत्त्यभावेघटत्वावच्छिन्न प्रतियोगिताकत्वा वच्छेदेनसमवाया वच्छिन्नप्रतियोगिताकत्व विरहान्न प्रसङ्ग इतिभावः ॥

विरोधित्वात् अन्यथायं घटाभाववान् इत्यादि
बुद्धे रपितादृशबोध विरोधिता पातादितिवा
च्यं अभावत्वस्य नञ्पदशक्तया, तादात्म्य
सम्वन्धावच्छिन्न प्रयोगिता कत्वस्य समा
न विभक्तिकानुयोगि प्रतियोगिवाचक पद-
समभिव्याहार रूपाकाङ्क्षावलेन, लाभात्ता
दात्म्य सम्वन्धावच्छिन्न प्रतियोगिताका भाव
त्व रूपान्योन्या भावत्वलाभेन तेनरूपेण श
क्तेर किञ्चित्करत्वात्नचनास्त्ये वान्योन्याभा
वे पृथक्शक्तिः संसर्गाभावान्यो न्याभावयो
र्द्वयोर्विशेषयोः पृथगुपादानम भावसामान्य
स्य नञर्थत्वलाभाय, यथायत्संशयव्यतिरेक
निश्चयावित्य त्रविशेषद्वयोरुपादानं व्यतिरे
कज्ञानसामान्य प्रतिवन्धकतालाभाय, इति
वाच्यं पृथक्शक्तिंविनानञर्थाः षडित्यस्यास

---

[ ८ ] यत्संशयव्यतिरेकनिश्चयौ यस्यप्रवृत्ति प्रतिवन्धकौ तन्नि
श्चयस्तद्धेतुरनु मितौव्याप्तेरिवेति प्रामाण्यवादमणौ प्रवृत्तिउत्पत्तिः
तथाचयद्व्यतिरेक ज्ञानत्वेनयदुत्पत्ति प्रतिवन्धकत्वं तन्निश्चयस्तद्धेतु
रितितदर्थः ॥

ङ्गतेर्दुर्व्वारत्वादितिचेत् स्यादेवं यद्यन्योन्या
भावत्वं तादात्म्यसम्बन्धा वच्छिन्नप्रतियो
गिताकत्वरूपंभवेत्. तदेवन, संयोग्यादिता
दात्म्यस्य संयोगादिरूपतया संयोगादिसम्ब
न्धावच्छिन्न संयोग्यत्यन्ता भावस्यान्योन्या
भावत्वापत्ते,ः अपितुअनुयोगितावेिशेषएव,
एवञ्च तादात्म्यस्यान्योन्या भावप्रतियोगिता
वच्छेदकत्वमप्य प्रामाणिकं, इहसंयोगेन घ
टोनास्तीत्यादिवत् अयंतादात्म्येन नघटइत्या
द्यप्रयोगात एवञ्चताद्दशा नुयोगिताविशेष
प्रकारकत्वमेवाभेद सम्बन्धेन प्रतियोगि प्र-
कारकधी विरोधित्वेतन्त्रं तथाचतेनरूपेण पृ
थक्शक्तिकल्पनं तत्प्रकारक वोधानुरोधेनाव
श्यकं, नचाभावत्वावच्छिन्ने प्रतियोगिसम्ब
न्धविषयान्योन्या भावत्वरूप विलक्षणानुयो
गित्वस्य भानमेवाभेद संसर्गकप्रतियोगिप्र-
कारकधी विरोधित्वेतन्त्र मास्तांतथाचाभाव
त्वविशिष्टशक्तधै वोपपत्तौकिंभेदेशक्तय न्तरेण
तिवाच्यं यतोनायंघटइत्यादौ घटत्वावच्छि

न्नस्य घटत्वावच्छिन्न निरूपिता नुयोगिता सम्बन्धेना भावत्वावच्छिन्ने विशेषण तया भानं, तस्यविपरीतज्ञान विरोधिताप्रयोजकत्व कल्पनञ्चापेक्ष्यलाघवा दभावविशेषण तापन्ना यामनुयोगितायां घटत्वावच्छिन्न निरूपितत्व सम्बन्धेन घटत्वावच्छिन्नस्यभानं, तस्याविप रीतधीविरोधिता प्रयोजकत्वञ्च कल्पयितुमु चितं, अनुयोगिताया एवप्रतियोगिरूप सम्ब न्धविनिर्म्मोकेण प्रत्यक्षेऽभानात् अभावस्य चेदन्त्वादि नापिभानात् प्रतियोग्युपरागेणै व भानमित्यनियमात्, एवञ्चाभावे धर्म्मिणिप्र तियोगिनः प्रकारत्व मप्रामाणिक मित्यनुयो गितांशे प्रतियोगि प्रकारकत्वमेव प्रतियोगि प्रकारकधी विरोधित्वेतन्त्वं, तथाचभेदत्व रूपा नुयोगिताविशिष्टे शक्त्यन्तर मावश्यकं, तद न्तरेणानुयोगिता विशेषणतया प्रतियोगिनोऽ न्वयासम्भवादित्याशयः ॥ ऋजवस्तु नञ्प दजन्यप्राति पदिकार्था भावान्वयबोधेसप्तमी[१]

[१] अनुयोगिवाचकपदोत्तर सप्तमीसमभिव्याहार ज्ञानमित्यर्थः ।

समभिव्याहार ज्ञानंहेतुः तज्जन्यान्योन्या भा
वबोधे समानाबिभक्तिक नामपदसमभिव्या-
हारज्ञानं तथेतिव्युत्पत्ति भेदसूचनायैवपृथगभि
धानं. नतुशक्तिभेदः इत्याहुः[२] ॥ नन्विहघटो
न अयंघटोनेत्यादौ घटादेरभावे प्रतियोगित
याऽन्वये पिघटत्वादेः प्रतियोगिताबच्छेदक
त्वभानं बिनाताद्दृशबाक्यज बुद्धीनांघटत्वादि
बिशिष्ट घटादिविशिष्टधी विरोधित्वानुपपत्तिः
इहघटपटौनस्तः नीलघटोनास्ति नायंनीलघ
ट इत्यादिबुद्धीनां घटत्वाबच्छिन्नबिशिष्ट बु
द्धय बिरोधितया तद्विशिष्ट वुद्धिबिरोधिता
यां शुद्ध घटत्वाबछिन्न प्रतियोगिता बगाहि
तायाः प्रयोजकत्वात् नचाभावांशे शुद्धघट
त्वावच्छिन्नप्रकारतै वोपदर्शितबुद्धि बिरोधिता

---

[ २ ] आहुरित्यस्वरस. नञर्थाः षड्रित्यसङ्गतेः पूर्वोक्त श
क्त्यन्तर युक्तेश्चतद्बीजत्व मितिभावः ॥

[ ३ ] नीलत्वस्ययत्रो पलक्षणतयाभानं तत्रनीलघटोनास्तीति ज्ञा
नस्यप्रतिबन्धकत्वन्नस्यादिति परमार्थ. ॥

प्रयोजिकानतु तादृशप्रतियो गिताक्गाहितेति वाचर्थमभावस्यतद्रूपा वच्छिन्नवन्ताविरोधि त्वाप्रयोजकंय स्तद्रूपावच्छित्रप्र तियोगिताक त्वं तदवगाहि तामनादृत्य तद्रूपावच्छिन्न प्रकारता मात्रेणाभा ववुद्धेः प्रतियोगिमन्ता धी विरोधित्वासम्भवात् घटोनास्तीतिज्ञाने शुद्धघटत्वावछिन्न प्रतियोगित्वा नवगाहने पितस्य घटसामान्यवन्ता वोधविरोधि त्वेनी लघटत्वावच्छिन्न वत्तावोधस्य शुद्धघटत्वाव छिन्नाभाव विरोधितातुव नीलोघटोनास्ती ति ज्ञानस्याधिकन्तु प्रविष्टं नतुतद्धानिरिति न्यायेन तद्विरोधित्वौचित्येन तस्यास्तत्रा वि रोधित्वं नतु घटोनास्तीतिबुद्धेरिति विशेषा नुपपत्तेः, एवमुक्तस्थलेघटत्वादेः प्रतियोगिता वच्छेदकत्वाभाने वक्ष्यमाणाति प्रसंगोदुर्वारः, तद्भानञ्च नपदार्थविधया उक्तवाक्ये तदुप

---

[ ४ ] नीलघटवतिघटोनास्ती त्यादिव्यवहारप्रसङ्ग इत्यर्थः ।

[ ५ ] घटत्वादेः प्रतियोगितावच्छेदकत्व भानञ्च ॥

स्थापका भावादिति कथं तदित्या काङ्क्षाया माकाङ्क्षादि बलात्प्रतियोग्य भावयोः सम्ब न्ध घटकतया तद्भान मित्याह तत्रचेति, त त्र, नञर्थे संसर्गा भावभेदेच, अन्वयितााव च्छेदका बाछिन्न प्रतियोगिताकत्व मिति, ये नरूपेण प्रतियोगिनः अभावांश विशेषणताात द्धर्म्म पर्य्याप्तप्रतियोगितावछेदक ताकत्वमि त्यर्थः, व्युत्पत्तिबललभ्य मिति, अपदार्थापि तद्रूपावछिन्नो पस्थापकशब्दविशेष समभि व्याहाररूपाकाङ्क्षा बलात्प्रतियोगि संसर्गतया लभ्यमित्यर्थः घटत्वाद्यवच्छिन्न प्रतियोगिता कत्वञ्च घटत्वाद्यवच्छिन्न प्रतियोगितानिरू पितानुयोगिता, साचघटादि रूपाविशेषण प्र तियोगिकेतितत् सम्बन्धतया भासते, अनुयो गितायां दर्शितविशेषणञ्च संसर्गतावछेदकत या भासते, नञ्पदार्थतावछेदका नुयोगिता यां घटादे रन्वयोपगमेतु तत्रतादृश प्रतियो गितानि रूपितत्वमेवसम्बन्धः घटादिनिष्ठप्र

[ १ ] घटत्वाद्यवछिन्न प्रतियोगितानिरूपि तत्वञ्चेत्यर्थ. ।

तियोगिता प्रतियोगिकं निरूप्यत्वं घटादिरूप
प्रतियोगि प्रतियोगिकमपीति तस्यघटादिस
म्बन्धता । केचित्तु अभावेघटादेः सम्बन्धोऽ
नुयोगित्वं, तत्सम्बन्धतयाभासते, घटादि
पारतन्त्र्येणच घटत्वादेरप्यभाव विशेषणतया
तस्यसम्बन्धः स्वावच्छिन्न प्रतियोगिताकत्वं,
अनुयोगितायां घटाद्यन्वय पक्षेपितस्यांघटा
दिपारतन्त्र्येण घटत्वादे रन्वयोबोध्यः सर्वत्रै
वच विशिष्टवैशिष्ट्य बोधईदृशी रीतिरनुसर
णीया, एवञ्चकम्बुग्रीवादि मत्वादेर्गुरुतयाऽ
नवच्छेदकत्व पक्षेकम्बुग्रीवादि मत्वावच्छिन्न
प्रतियोगिताया अप्रसिद्धावपिनक्षतिः अवच्छि
न्नप्रतियोगिता कत्वस्यकम्बुग्री वादिमत्वस्य
चखन्डशः प्रसिद्ध्यैवतादृशसम्बन्धेन तस्याविशे
षणत्व सम्भवात्तचान्वयितावच्छेदका वच्छिन्न
त्वविशेषित प्रतियोगितायाः सम्बन्धप्रवेश प
क्षेपिविशेष्य विशेषणयोःखन्डशः प्रसिद्धयावि
शेष्य विशेषण भावेन सम्बन्धतानिर्व्वहत्येवे
तिवाच्यं एवंसति तादृशवुद्धे र्भ्रमत्वासम्भवात्

तथाहि ताद्दशंज्ञानं बिशिष्टसम्बन्धेनाभावां श प्रतियोगिनोनभ्रमः बिशिष्टसम्बन्धाप्रसि- द्धया तत्सम्बन्धाबछिन्ना भावस्याप्रसिद्धेः त- त्सम्बन्धाबच्छिन्न तदभावबतीत्यादेः तत्स म्बन्धघटित भ्रमत्बस्य[३] दुर्न्निरूप्यत्बात्, तज् ज्ञानं प्रतियोगितां शेकम्बुग्रीबादिमत्वाबछिन्न त्बस्यभ्रमः तदबछिन्नत्वस्य प्रसिद्धिश्च विषयि ता सम्वन्धावच्छिन्न तद्विशिष्टाभावस्य घट त्वादिविशिष्टा भावासमनियतस्यै प्रतियोगि तायां, वृत्यनियामक तयाविषयिताया अभा वप्रतियोगिता वछेदकसम्वन्धता विरहेपि ते नसम्वन्धेन तद्विशिष्टवद्भेद प्रतियोगितावछे दकतायां[५], इत्यपिन,भ्रमत्वस्य प्रकारताघटित

---

[ ३ ] तत्सम्बन्धावछिन्न तदभाववद्विशेष्यक तत्सम्वन्धेनत त्प्रकारक ज्ञानत्वस्येत्यर्थ ।

[ ४ ] एतेनविषयिता सम्बन्धावछिन्नता दशप्रतियोगितावछे दकत्व घटत्वेनसम्भवती तिसूचित ॥

( ५ ) चैत्रोनपचतीत्यनुरोधेना वछेदकतायां वृत्यनियामक स- म्वन्धावछिन्न त्वस्यसर्व्व सम्भतत्वादितिभाव. ॥

त्वेन सम्बन्धतावच्छेदकीयविषयतायां वि-
शेषणज्ञानानपेक्षा यांप्रकारतात्वा सम्भवेन
तदंशे भ्रमत्वासम्भवात्। यत्तु तद्रूपावच्छिन्न
प्रतियोगितावच्छेदकसम्बन्धताकतदभावव
तितद्रूपेणतत्संसर्गकतत्प्रकारकं ज्ञानंतद्रूपाव
च्छिन्नतत्सम्बन्धेनतद्भ्रमः, विशिष्टसम्बन्धाप्र
सिद्धिस्थलेपि व्यधिकरणतद्रूपावच्छिन्नप्रतियो
गितावच्छेदक सम्बन्धताकाभावप्रसिद्ध्याता
दृशाभावमादाय तद्रूपावच्छिन्नतत्सम्बन्धेनभ्र
मत्वनिर्व्वाहात् कम्बुग्रीवादिमान्नास्तीत्यादि
ज्ञानंकम्बुग्रीवादिमत्वाद्य वच्छिन्नत्वादिविशे-
षितप्रतियोगिता सम्बन्धेनप्रतियोगिनएवभ्र
मः व्यधिकरणधर्म्मावच्छिन्न प्रतियोगिताका
भावः प्रतियोगितावच्छेदक विशिष्टप्रतियो-
गिज्ञानस्याभावधीहेतुतया तादृशकारणवाधे
नतादृशप्रतीत्य सम्भवइतियुक्त्याप्रामाणिकारे
णखन्डितः व्यधिकरणधर्म्मावच्छिन्न प्रतियो
गितावच्छेदक सम्बन्धताकाभावखन्डनन्तुता
दृशरीत्यानसम्भवति, विशिष्टसम्बन्धावच्छि

न्नाभावबुद्धौविशिष्टसम्बन्ध ज्ञानस्याहेतुत्वा
दिति, तदपिनसत्, तादृशाभावस्याननुभवा
त्। अथस्वावच्छिन्नप्रतियोगिताकत्व सम्ब-
न्धेनप्रतियोगि विशेषणस्यप्रतियोगिविशेष्या
भावांशेप्रकारतोप गमेपीतघटादिमतिर्नीलघ
टोनास्तीत्यादिबुद्धेरनुपपत्तिः स्वावच्छिन्नप्र-
तियोगिताकत्वस्यस्वपर्य्याप्त प्रतियोगितावच्छे
दकताकत्वरूपतया नीलघटत्वाद्यवच्छिन्ना
भावेघटत्वादेर्विशेषणस्य तादृशसम्बन्धविर-
हात्नहितादृशाभावप्रतियोगिता वच्छेदकता
घटत्वादौपर्य्याप्तानीलत्वादेरपि तत्प्रतियोगि
तावच्छेदकत्वात् घटादिसामान्याभावस्यच
तादृशसम्बन्धेन घटत्वादिसम्बन्धिनः पीत
घटादिमत्यसत्वाद तोनीलसहितघटत्वादिरू
पप्रतियोगिविशेषण धर्म्मपर्य्याप्तप्रतियोगिता
वच्छेदकताकत्वं प्रतियोगिसम्बन्ध एवेत्युपेय
मितिचेन्ननीलघटोनास्तीत्यादौ नीलादिसहि
त स्वपर्य्याप्तप्रतियोगितावच्छेदकता कत्वस्य
घटत्वादिसम्बन्धतोपगमेनसामञ्जस्यात् नच

स्वपदार्थस्यघटत्वादेः सम्बन्धाघटकत्वेननी-
लादिसहितत्वेन घटत्वादेर्घटत्वादिसंसर्गघट
कत्वासम्भवात् नीलादिसहितपर्य्याप्तप्रतियो
गिताबच्छेदकताकत्वस्यकथं घटत्वादिसम्ब
न्धतेतिबाच्य मगत्याऽत्रसम्बन्धिनोपिसम्बन्ध
घटकत्वोपगमादितिबदन्ति । तन्न,कम्बुग्रीवा
दिमान्नास्तीत्यादौ कम्बुग्रीवादिमत्वादौप्रति
योगिताबच्छेदकत्वपर्य्याप्ति भानस्यावश्यकत
यास्वपर्य्याप्त प्रतियोगिताबच्छेदकताकत्वमेवा
भावेतत्सम्बन्ध इत्युपेयं, तदर्थश्चस्वाभिन्नधर्म्मा
नवाच्छिन्नप्रतियोगिताकत्वं, तत्रचस्वपदार्थस्य
कम्बुग्रीवादिमत्वादेरनिबेशोनसंभवति, भिन्न
त्वस्यकेवलान्वयि तयाभिन्नधर्म्मानवच्छिन्नत्वा
प्रसिद्धेः, तन्निबेशेचसम्बन्धाप्रसिद्धिर्दुर्बारैवेति,
बस्तुतस्तुकम्बुग्रीवादिमान्नास्तीत्यादि बुद्धौक
म्बुग्रीवादिमत्वाद्यबच्छिन्न निरूपितस्वबिशेषि
तानुयोगितायाः प्रतियोगिसम्बन्धतयाभानम
तपिनानुपपत्तिः यादृशसम्बन्धेयद्रूपवत्वयत्प्रति
योगिकत्वयद्धर्म्म्यनुयोगिकत्वानां त्रयाणामभा

वः तद्रूपविशेषिततत्सम्बन्धेनतत्प्रकारकंतद्ध- र्म्मिविशेष्यकं ज्ञानंतद्रूपावच्छिन्नतत्सम्बन्धेनत स्यतद्धर्म्मिणिभ्रमइति भ्रमत्वनिरुक्तथातादृशबु द्धेः कम्बुग्रीवादिमत्वाद्यवच्छिन्न निरूपितत्व- विशेषितानुयोगितासम्बन्धेन प्रतियोगिभ्रम- त्वोपपादनसम्भवात् तद्धर्म्मावच्छिन्ननिरूपित त्वञ्चविषयित्वादौप्रसिद्धं, सम्बन्धधर्म्मिकोभया भावघटितञ्च भ्रमत्वंमवश्योपादेयमन्यथावृत्त्य नियामकसम्बन्धस्या भावप्रतियोगितानवच्छेदक त्वेतत्सम्बन्धेनतस्याभाववतितेन सम्बन्धेनत त्प्रकारकत्वंभ्रमत्वमितिनिर्वचनासम्भवात् त थानिर्वचनेवृत्त्यनियामक सम्वन्धावच्छिन्नाभा वाप्रसिद्ध्यातत्सम्वन्धावगाहिभ्रमासंग्रहात्,

---

[ १ ] यत्सम्बन्धेयत्प्रतियोगिकत्वयनुयोगिकत्वोभया भावस्त त्सम्बन्धेनतत्प्रकारक तद्विशेष्यक ज्ञानंतत्सम्बन्धेन तस्यतस्मिन् भ्रम इति ।

( २ ) स्वामित्व सम्बन्धेनमणिप्रकारकाधन विशेष्यकज्ञानाव्या प्तेरित्यर्थः ।

तेनसम्बन्धेनतद्वच्छेदे[२]निवेशेऽप्यधिकरण सम्ब
न्धेनप्रमासंग्रहात्[३] एवञ्चस्वसमवायिसंयोगस
म्बन्धेनस्फटिकविशेष्यकलौहित्य प्रकारकप्रमा
यामतिव्याप्तिप्रकारोऽस्मत्कृतव्युत्पत्तिविचारेऽ
नुसन्धेयः, कम्बुग्रीवादिमान्नास्तीतिवाक्यस्य
प्रामाण्येतदन्यथानुपपत्यागुरुधर्म्मस्य प्रतियो
गितावच्छेदकत्वमावश्यक मन्यथानीलोघटो
नास्तीतिवाक्यस्याप्रामाण्यंस्यात्तत्राभेद स
न्धेन नीलरूपादिमतोऽन्वयितावच्छेदकतयाते
न सम्बन्धेनतस्यप्रतियोगितावच्छेदकत्वस्य
गौरवेणासम्भवात् समवायादिनानीलरूपादेर
वच्छेदकत्वेलाघवात् नचान्वयितावच्छेदकावि
शिष्ट[४]व्यापकतावच्छेदकावच्छिन्नप्रतियोगिता
कत्वमेव सम्बन्धोवाच्यःकम्बुग्रीवादिमत्वादेर
भावप्रतियोगितानवच्छेदकत्वेपितद्विशिष्टव्या
पकतावच्छेदकघटत्वाद्यवच्छिन्न प्रतियोगिता

---

[ २ ] अवच्छेदकतायांवृत्यनियामक सम्बन्धावाच्छिन्नत्वस्यसर्व
सम्मतत्वादिति, ( ३ ) सयोगेनगुणवतोऽप्रसिद्धेरिति ॥
[ ४ ] गुणेसत्तानास्तीति वारणायगुर्वेनुधावनमिति ॥

कत्वप्रसिद्ध्यानोक्तवाक्य प्रामाण्यानुपपत्ति
रितिबाच्यंगुरुधर्म्मस्यप्रतियोगितान वच्छेद
कत्वेकम्बुग्रीवादिमत्वादि घटिततद्विशिष्टवान्नि
ष्ठाभाव प्रतियोगितावच्छेदकत्वस्वस्यगुरुतया
तदवच्छिन्नाभाव रूपव्यापकतावच्छेदकत्वा
प्रसिद्ध्याव्यापकता वच्छेदकत्वशरीरेप्रतियो
गितानांविशिष्यो पादेयतयातत्तत्प्रतियोगि
तावच्छेदकत्वस्वा वच्छिन्नाभावकूटस्यदुर्ज्ञेय
तयातस्यशाब्दवोधविषयत्वासम्भवात्प्रत्यन्ता
त्मकविशिष्टबुद्धौसंसर्गोपस्थितेरनपेक्षि तत्वे
पिशाब्दवोधे संसर्गतात्पर्यज्ञानस्यहेतुतयासं
सर्गोपस्थित्यपेक्षणात् तथाहिघटमानयेत्यादा
विदंवाक्यंकर्मत्वाविशेष्यकाधेय त्वसंसर्गकघट
प्रकारकप्रतीतिपर मित्याकारकस्यैवसंसर्गता
त्पर्यज्ञानस्यहेतुताबाच्या, तत्रचाधेयत्वंप्रकार
एवनतुसंसर्गः नचतत्राप्याधेयत्वंसम्बन्धतयै
वविषयः तथाचेदंवाक्यंघटवत्कर्मत्वंप्रतीतिप

---

[ १ ] कर्म्मत्वाशेघटससर्गश्चाधेयत्व ।

रमित्याकारकज्ञानमेवहेतुरितिवाच्यं तादृशवा
क्यार्थस्यापूर्वतयाशाब्दबोधात्पूर्वंतज्ज्ञानस्या
सम्भवात् कथञ्चित्संभवेपिशब्दस्यानुवादक-
तापत्तेः यदिचेदंवाक्यं घटवत्प्रतीतिपरमित्या
कारकमेव संसर्गतात्पर्यज्ञानंहेतुः, प्रतीत्यं
शेसंसर्गविधयाभासमानघटसंसर्गश्चस्वानिष्ठा
धेयत्वसम्बन्धा वच्छिन्नप्रकारतानिरूपितकर्म
त्वनिष्ठविशेष्यताकत्वमेवे त्याधेयत्वस्याप्रकार
तयानतज्ज्ञानापेक्षानवाशब्दस्यानुवादक-
तेतिमन्यते, तथापितद्धर्म्मावच्छिन्नप्रकारक-
बुद्धौतद्धर्म्मांशेस्वरूप सम्बन्धरूपप्रतियोगि-
तावच्छेदकत्वबुद्धेरेवलाघवेनानुभवबलेनच-
विरोधित्वात् कम्बुग्रीवादिमान्नास्तीतिवाक्य
जबुद्धेः कम्बुग्रीवादिमत्वाद्यंशेतादृशप्रतियो
गितावच्छेदकत्वानव गाहित्वेतस्याःकम्बुग्री
वादिमत्वाद्यवच्छिन्नविशिष्टधी विरोधित्वा
नुपपत्तेश्च, अन्वयितावच्छेदकताचयत्ररूपा-

---

[ २ ] पूर्व्वमनुपस्थितत्वेनेत्यर्थः ॥

न्तरावच्छिन्नातत्रतद्रूपविशिष्टा वच्छिन्नप्रति योगिताकत्वमभावेभासतेऽतोघटत्वादि रूपैक जात्याद्यवच्छिन्नाभाववतिपटत्वादि रूपापरजात्यादि विशिष्टवतिजातिमान्नास्तीतिवाक्यमप्रमाणंतद्देशेजातित्वाद्युपलक्षिता वच्छिन्नाभावसत्वेपितद्विशिष्टावच्छिन्नाभावासत्वात् तद्विशिष्टावच्छिन्नाभावश्चावच्छेदक विशेषणधर्म्मान्तर्भावेणपर्य्याप्तप्रतियोगितावच्छेदकताकः तद्विशेषणावच्छिन्नप्रतियोगिता वच्छेदकताकोवाऽभावः, येनसम्बन्धेनयस्यान्वयितावच्छेदकता यत्र तत्सम्बन्धावच्छिन्नमेवप्रतियोगितावच्छेदत्वंतत्रभासते तेनविषयितासम्बन्धेनगुणत्वावच्छिन्नप्रतियोगिताकाभाववति घटादौगुणोनास्तीति वाक्यस्याप्रामाण्योपपत्तिःसमवायेनगुणत्वादिविशिष्टवाचकगुणादिपदात् तेनैवसम्बन्धेनतदवच्छिन्नस्यान्वयबोधात् विषयितादेस्तत्रान्वयितावच्छेदकतानवच्छेदकत्वात्,

---

( १ ) विषयितासम्बन्धावच्छिन्नत्वमव च्छेदकतायांबोध्यमिति ॥

अथघटत्वेन पटोनास्तीत्यादौव्यधिकरणधर्म्मा
वच्छिन्नप्रतियोगिताकोऽभावःप्रतीयत इतिसो
न्दडमतेऽन्वयितावच्छेदकस्यप्रतियोगिता वच्छे
दकतयाभाननियमोनसम्भवतितत्र प्रतियोगि
तावच्छेदकतयाभासमानस्य घटत्वादेरन्वयिता
नवच्छेदकत्वात्नचतत्रतृतीयार्थोवैशिष्ट्यं तस्य
चप्रतियोगिन्यन्वयोपगमात् घटत्वादेरभावान्व
यितावच्छेदकत्वं निराबाधमेवतस्यप्रतियोगिवि
शेषणवैशिष्ट्यविशेषणत्वेपिवैशिष्ट्यपारतन्त्र्येण
प्रतियोगिन्यपिविशेषणत्वोपगमादितिवाच्यं त
थासतिप्रतियोगिनिबाधित धर्म्मस्यतदंशेप्रका
रतयाबोधनेनतद्वाक्यस्याप्रामाण्यापत्तेः, एवंव्य
धिकरणधर्म्मस्यप्रतियोगिनि प्रकारतोपगमेप्य
न्वयितावच्छेदकतानव्यधिकरणधर्म्ममात्रपर्य्या
प्ताऽपितुसमानाधिकरणधर्म्ममन्तर्भाव्यैव, त
थाचसमानाधिकरण धर्म्मस्यतत्रप्रतियोगिता
वच्छेदकानन्तर्भावादन्वयितावच्छेदकतापर्य्या
प्त्यधिकरणपर्य्याप्त प्रतियोगितावच्छेदकताकत्व
भानासम्भवः, नह्यन्वयितावच्छेदकैकदेशपर्य्या

सप्रतियोगितावच्छेदकताकत्व मपिभासतइत्यु
पगमसम्भव, स्तथासतिघटसामान्याभावतात्प
र्येणापिनीलघटोनास्तीतिप्रयोगापत्तेः तद्धर्म्मा
शप्रतियोगितावच्छेदकत्वपर्य्याप्तिभानेतद्धर्म्मप
र्य्याप्तान्वयितावच्छेदकता कबोधसामग्र्यपेक्षा
याऽवश्योपेयत्वात् नचतावतैवकथंसामान्याभा
वतात्पर्य्येणतथाप्रयोगा पत्तिवारणंशुद्धघटत्वा
दिपर्य्याप्तप्रकारता वच्छेदकताकबोधोत्पादकघ
टोनास्तीतिवाक्यघटित सामग्र्याश्चाधिकान्त्वि
त्यादिन्यायेननीलघटोनास्तीति प्रयोगस्थले
पिसत्वादितिवाच्यम गत्याताद्दशान्वयबोधपदा
र्थान्तरविशेषितस्वार्थान्वय परत्वेनागृह्यमाणप
दजन्यघटत्वावच्छिन्नोपस्थितेः शुद्धघटत्वाव
च्छिन्नप्रकारकबोधहेतुत्व मुपगम्यदर्शितस्थ
लेताद्दशबोधसामग्र्य भावस्योपपादनीय वात्
नचयत्रनञर्थे तृतीयान्तेनघटत्वावच्छिन्नप्रति
योगिताकत्वं प्रकारतयानप्रत्याय्यतेतत्रैवान्व
यितावच्छेदके प्रतियोगितावच्छेदकत्वस्यसंसर्ग
घटकतयाभाननियमः घटत्वेनपटोनास्तीत्यादौ

घटत्वाद्यन्वयितमवच्छिन्न प्रतियोगिताकत्वं तृतीयया<ऽभावप्रकारतया प्रत्याय्यतइत्यन्वयि ताव>च्छेदकपटत्वादि कमुपलक्षणतयैवभासते ऽतः समानाधिकरणधर्म्मस्यव्यधिकरणधर्म्मा वच्छिन्नाभावप्रतियोगिता नवच्छेदकत्वेपिन क्षतिरितिवाच्यं प्रतियोग्युपलक्षणतयोक्तस्थले ऽन्वयितावच्छेदक भानोपगमेघटवति, नीलघ टत्वादिनापीतघटाद्यभाव मादायघटत्वेनघटो नास्तीतिव्यवहारस्य, स्वप्रकृत्यर्थपर्य्याप्तप्रतियो गितावच्छेदकतायाः तृतीयार्थत्वमुपगम्यघट-त्वेनेत्यस्यघटत्वपर्य्याप्तप्रतियोगिता वच्छेदक त्वार्थकतयानीलघटत्वावच्छिन्ना भावतद्वाधेन वारणसम्भवेपि, घटत्वावच्छिन्नद्रव्यत्वोपल क्षितपटाभावमादाय घटवतिघटत्वेनद्रव्यन्ना स्तीतिव्यवहारस्यदुर्वारत्वात् नचतृतीयया, स मभिव्याहृताभावान्वयितावच्छेदक रूपव्याधि करणधर्म्मावच्छिन्न प्रतियोगिताकत्वमेववो

[ १ ] स्वतृतीया ।

ध्यतइति घटत्वस्यद्रव्यत्वाव्यधिकरणतयान त
थाप्रयोगइतिवाच्यमवच्छेदकस्य वास्तववैयधि
करण्यविरहक्षणेघटत्वद्रव्यत्वयो वैयधिकरण्य
भ्रमदशायांघटत्वेनद्रव्यन्नास्तीति वाक्याधी
नशाब्दबोधानुपपत्तेः व्यधिकरणत्वेनज्ञायमा
नत्वविवक्षणे तज्ज्ञानदशायांघटत्वावच्छिन्न
प्रतियोगिताकत्वेन पटाभावबोधकतयातद्वा
क्यस्यप्रामाण्यापत्तेः नचतद्वाक्यस्यघटत्वेद्रव्य
त्वव्यधिकरणत्वबोधकतयान प्रामाण्यप्रसंगइ
तिवाच्यंतदुभय वैयधिकरण्येपदार्थत्वस्यवा
क्यार्थत्वस्यचाभावेन तद्वाक्यतोबोधासम्भवा
त्। वस्तुतोन्यूनवृत्तिघटत्वावच्छिन्नद्रव्यादि
सामान्याभाववतिघटादि शून्यदेशेतथाव्यव
हारात्[1]वैयधिकरण्यभानमयुक्ततरं, नचतृतीया
न्तेनयत्रघटत्वावच्छिन्न प्रतियोगिताकत्वमभा
वेबोध्यते तत्रान्वयिता वच्छेदक व्यापक
प्रति योगिता कत्वं सम्बन्ध तयाभास

(१) घटत्वेनद्रव्यन्नास्ती तिप्रतीतेः ॥

तद्दत्युपेयं तथाचघटबतिघटत्वावच्छिन्नपटाभा
वमादायन तथाप्रयोगप्रसंगःतादृशाभावप्रति
योगितायाद्रव्यत्वाव्यापकत्वादितिवाच्यमेवम
पिघटअतिघटत्वावच्छिन्नघटाघटोभयाभावमा
दायघटत्वेनघटाघटौनस्तइतिवत घटत्वेनप्रमे
यन्नास्तीतिव्यवहारापत्तेर्दुर्वारत्वात् तादृशाभा
वप्रतियोगितायाः सकलप्रमेयवृत्तित्वात्, अत्र
वदन्तिव्याधिकरणधर्म्मा वच्छिन्नाभावस्यव्य
धिकरणधर्म्मवत् प्रतियोगिविशेषणतयाभा
समानः समानाधिकरणधर्म्मोपि प्रतियोगि
तावच्छेदकः अतएवघटत्वेनघटपटोभयन्ना-
स्तीत्यादिप्रतीतिविषया भावस्यप्रतियोगिता
याअव्यासज्यवृत्तित्वेपिव्याधिकरण धर्म्माव
च्छिन्नप्रतियोगिताकत्वनिर्वाहः घटत्वादेस्त
त्प्रतियोगितासमानाधिकरण त्वेपिप्रतियो-
गितावच्छेदकतापर्य्याप्त्यधिकरणस्यघटत्वादि
सहितघटपटोभयत्वादेः प्रतियोगिताधिकर
णघटपटयोरपर्य्याप्तेरिति, यदिचपटनिष्ठप्रति
योगिताव्यधिकरणघटत्वावच्छिन्नत्वे नैवतद
भावस्यव्यधिकरण धर्म्मावच्छिन्नप्रतियोगि-

ताकत्वनिर्वाहस्तथापि केवलान्वयित्वानुपप-
त्तिः प्रतियोगितावच्छेदकतापर्य्याप्त्यधिकरण
धर्म्मविशिष्टप्रतियोगिनिरूपिताधिकरणतया
सममभावस्य विरोधाद्घटवतिभूतलादौताह
शाभावासत्वप्रसङ्गात्, अस्मन्मतेचव्यासज्य
वृत्तितदभावप्रतियोगितावच्छेदकतापर्य्याप्त्य
धिकरणघटत्वघटपटोभय त्वयोरधिकरणाप्र-
सिद्ध्यातादृशाभाव विरोध्यधिकरणतायाश्च
प्यप्रसिद्ध्यातस्यकेवलान्वयित्वनिर्व्वाहः न-
चैतदनुरोधेन, वह्नित्वविशिष्टाधिकरणताव-
तिपर्व्वतादौमहानसीयवह्नित्वावच्छिन्नाभाव
सत्वानुरोधेनच, प्रतियोगितावच्छेदकताप-
र्य्याप्त्यधिकरणधर्म्म विशिष्टनिरूपिताधिकर
णतयैवसममभावस्यविरोधः तदाघटपटौनस्त
इतिप्रतीतिविषयघटपटोभयत्वावच्छिन्नाभाव
स्यापि केवलान्वयित्वप्रसङ्गस्तथाहितादृशाभा
वस्यप्रतियोगितावच्छेदकतापर्य्याप्तिर्नो भय-
त्वमात्रेकेवलघटत्वादौवा, यत्किञ्चिदुभयवति
केवलघटादिमतिचतादृशाभावासत्वप्रसङ्गात्,
नापिघटपटवृत्तित्वविशिष्टद्वित्वे, तादृशविशि

ष्टानुपस्थितौतथाप्रतीत्यनुदयप्रसङ्गात्, अपि
तूभयत्वेतद्धर्म्मितावच्छेदकतापन्नेघटत्वेपटत्वे
चेतिवाच्यंस्वप्रतियोगितावच्छेदकता पर्य्याप्ति
र्य्यादृशेतादृशपर्य्याप्तिनिरूपकता वच्छेदकता
काधिकरणतयासममभावस्यविरोधात् घटप
टावत्रेतिप्रतीतिसाक्षिकाद्वित्व तद्धर्म्मितावच्छे
दकतापन्नघटत्वपटत्वसमुदाय पर्य्याप्तिनिरूप
कतावच्छेदकता काधिकरणतावतिअत्रघटप
टौनस्तइतिप्रतीतिसिद्धता दृशसमुदायपर्य्या
प्तप्रतियोगितावच्छेदकताका भावासत्वात्तादृ
शाभावस्यकेवलान्वयित्वप्रसङ्गविरहात् केचि
त्तुतद्भावप्रतियोगित्वमगत्याव्यासज्यवृत्ति
स्वीकुर्व्वते तथाचयद्धर्म्मावच्छिन्ने प्रतियोगिता
याः पर्य्याप्तिः प्रतियोगिवताच्छेदकाविशिष्टस्य
तदवच्छिन्नस्यैवत्राभावविरोधितयान समाना
धिकरणधर्म्मस्य प्रतियोगितावच्छेदकत्वंम्विना
तादृशाभावस्य केवलान्वयित्वानुपपत्तिरित्या
हुः, घटत्वेनपटोनास्तीत्यादौयद्धर्म्मावच्छिन्न
प्रतियोगिताकत्वंतृतीयान्तेनाभावप्रत्याय्यतेय
श्चधर्म्मोऽभावनिरूपित प्रतियोगिनिष्ठप्रकार

ताबच्छेदकतयाभासते तदुभयपर्य्याप्तप्रति-
योगिताबच्छेदकता कत्वमभावांशेप्रतियोगि
नः सम्बन्धतयाभासतइत्युपेयते, अभावांशे
धर्म्मान्तराबच्छिन्नप्रतियोगिताकत्व बोधकतृ
तीयान्तासमभिव्याहारस्थलेचयादृश धर्म्मोऽ
न्वयिताबच्छेदकस्तत्पर्य्याप्तप्रतियोगि बच्छेद
कताकत्वमेवसम्बन्धइतिनकाप्यनुपपत्तिः घ
टत्वेनद्रव्यन्नास्तीत्यादिबुद्धौद्रव्यत्वादावपिप्र
तियोगिताबच्छेदकत्वभानात् घटत्वेनपटोना
स्तीत्यादिधीविषयाभावस्यच प्रतियोगितायाः
द्रव्यत्वाद्यनबच्छिन्नत्वात्, अतएवघटत्वबिशि
ष्टपटवानयमितिभ्रमेऽत्रघटत्वेन पटोनास्तिघ
टत्ववान्पटोनास्तीतिबाक्यजबुद्धयोरेकमेव प्र
तिबन्धकत्वं, उभयत्रघटत्वपटत्वयोः प्रतियो-
गिताबच्छेदकत्वपर्य्याप्तिस्संसर्गतयाभाना त्तदु
भयाबच्छिन्नप्रकारतयाऽघटितस्यतदुभयपर्य्या
प्तप्रतियोगिताबच्छेदकता कत्वसंसर्गावगाहि
बुद्धित्वरूपप्रतिबन्धकताबच्छेदकधर्म्मस्यतदु

---

( १ ) घटपटौनस्त इतिज्ञानवारणायाघटितान्त ।

भयसाधारणत्वादित्यवधेयम् । अथघटोना
स्तीत्यादिवाक्यात् घटत्वादिरूपसामान्यध-
र्म्मावच्छिन्नप्रतियोगिताकत्व शून्ययोर्ध्वंस-
प्रागभावयोरन्वयितावच्छेदका वच्छिन्नप्रति
योगिताकत्वविरहेणाप्रत्ययात् ध्वंसप्रागभाव
साधारण्यन्ननञ्पदशक्तेर्न्नसंभवतीतिचेन्नध्वंस
प्रागभावयोरत्यन्ताभावविरोधिता मतेऽन्तरा
श्यामेरक्तं[2]रूपन्नास्तीत्यादि व्यवहारानुरोधेन
ध्वंसप्रागभावयोरपिसमय विशेषावच्छेदेन-
सामान्यावच्छिन्नप्रतियोगिता कत्वोपगम-
स्यावश्यकतयातयोरपिनञाप्रतिपादनात्, व्यु
त्पत्तिविरोधेनतयोस्तेना प्रतिपादनेपिसदात
नत्वघटितात्यन्ताभावत्वा पेक्षयाध्वंसादिसा-
धारणाभावत्वस्य लाघवेनासदातनभावरूपा
भावाभावे[3] साधारण्यानुरोधेनचप्रवृत्तिनिमि-
त्ततयातयोरपिनञ्पदवाच्यत्वान पायात्नचा

---

[२] अभेदसम्बन्धा वच्छिन्नप्रकारत्वा प्रयोजकस्यैवगुणवोध
कशुक्लादिशब्दस्यपुंस्त्वानुशासनान्नतन्निर्देशः अभेदसम्बन्धा-
वच्छिन्नत्व निवेशाद्रक्तोनास्तीत्युपपत्तिः ॥ [३] अन्यथाघटाभा
वोनास्तीत्यत्रनञा घटात्मकाभाव स्यवोधोनस्यादितिभावः ॥

त्यन्ताभावत्वमखण्डधर्म्मान्तर मनुयोगिता-
विशेषरूपंवा, नसदातनत्वघटितमितिनगौर
वादिकमितिबाच्यंतादृशधर्म्मान्तरेमानाभा-
वात् तद्व्यक्तिर्न्नास्तीतिवाक्यात्तद्व्यक्तित्वा-
बच्छिन्नप्रतियोगिताकयोर्ध्वंस प्रागभावयो-
र्बोधनाच्चध्वंस प्रागभावसाधारणशक्तेराव-
श्यकत्वात् नचध्वंसप्रागभावयोरत्यन्ताभाव
बिरोधस्याप्रामाणिकतया तद्व्यक्तित्वाबच्छि
न्नध्वंसाधिकरणेतादृशात्यन्ता भावसत्वात्
सएवोक्तबाक्यात्प्रतीयतइतिबाच्यं ध्वंसाधि
करणेतादृशात्यन्ताभावस्या प्रामाणिकत्वात्
। अन्वयितावच्छेदकाबच्छिन्नत्वाविशेषिता
याः प्रतियोगितायानञ्पदार्थसंसर्गाभावप्रति
योगिसंसर्गत्वोपगमेबाधकं दर्शयतिनीलघ-
टवतीति, नघटइत्याद्यव्यवहारादित्यनेनस
म्बध्यते, तादृश्याः प्रतियोगितायानञर्थभेदे
प्रतियोगिसम्बन्धत्वेबाधकमाह नीलोघटइ-
ति, अव्यवहारादिति, व्यवहारस्यप्रमाणत्वा
भावादित्यर्थः शुद्धप्रतियोगितायास्सम्बन्ध
त्वेऽबाधितविशेषान्तराभाव वोधकतयातत्तद्वा

ऋथानांप्रामाण्यस्य दुर्व्वारतयाव्युत्पन्नैरपित
थाप्रयुज्येतेतिभावः, तद्रूपविशिष्टप्रतियोगिवि
शेषितेधर्म्मिणिशुद्धतद्रूप विशिष्टप्रतियोगिवि
शेषितसंसर्गाभावस्य, तद्रूपविशिष्टप्रतियोगि
विशुद्धतद्रूपावच्छिन्नप्रतियोगि विशेषितभे
दस्यचबोधेननञोऽसामर्थ्यो पगमेनदर्शितप्र
योगवारणसम्भवेपि वस्तुगत्यानीलघटादि
मतिनीलघटादौचअत्रनघटः अयंनघटइत्या
दिप्रयोगस्य प्रामाण्यप्रसङ्गोदुर्वारइतिबोध्यं,
नचवस्तुगत्याऽन्वयितावच्छेदका वच्छिन्ना-
याप्रतियोगितातस्या स्सम्बन्धतानियमेनाप्यु
क्तातिप्रसङ्गः शक्यवारणइतिकिमन्वयितावच-
च्छेदकावच्छिन्नत्वभानोपगमेनेतिवाच्यंलोहि
तवह्निर्नास्तीत्यादौलोहित वह्न्यादेरप्रसिद्ध्या
अन्वयितावच्छेदका वच्छिन्नत्वेनवास्तवनप्र
तियोगिताऽव्यावर्तनासम्भवात् अन्वयितावच
च्छेदकावच्छिन्नत्वाभाने विपरीतज्ञाननिवर्त
कत्वायोगस्यदर्शितत्वाच्च, सामान्यतोघटम
नुपादायनीलघटत्वेन तदुपादानञ्चतदधिकर
णतत्रचविशेषान्तरात्यन्तान्योन्या भावस्या-

बाधितत्वप्रकाशनाय, केचित्तु अभावाधिकर-
णतायामन्वयितावच्छेदका वच्छिन्नत्वभान-
मुपगम्यापिघटवतिनघटः घटोनघटइत्यादि
प्रयोगः शक्यवारणः पीतघटादिरूपविशेषा
त्यन्तान्योन्याभावाधिकरणतायाः प्रतियोगि
संसर्गतादात्म्यवत्साधारणं घटवत्वघटत्वा-
भ्यामनवच्छेदादतोनील पदोपादानमित्याहुः
तन्नसाधु, घटप्रतियोगिकस्यघटाकाशोभ-
यत्वावच्छिन्नात्यन्ताभावस्य घटपटोभयत्वा-
वच्छिन्नभेदस्य चाधिकरणतायाअनतिप्रस
क्तघटवत्व घटत्वाभ्यामवच्छेदसम्भवेनता-
दृशाभावमादायतथाप्रयोगस्य दुर्वारत्वात्, प्र
त्येकाभावातिरिक्तव्यासज्य वृत्तिधर्म्मावच्छि
न्नाभावानभ्यु पगमेपिघटप्रतियोगिकाभा-
वत्वेनानुगताभावाधि करणतानांघटवत्वा-
दिनाऽवच्छेदेबाधका भावादन्यथाबह्वयादिरू
पबह्वयाद्यभावाभावानां प्रत्येकनिरूपिताधि-

( १ ) प्रतियोगिसंसर्गवत्साधारणघटवत्व प्रतियोगितादात्म्य
वत्साधारणघटत्वाभ्यामित्यर्थः साधारणा न्तेनातिप्रसक्तत्वंसूचितं ॥

करणतानां धूमवत्वावच्छेद्यत्वासम्भवेनधूमव-
तिवह्न्यभावोनास्तीत्यादि व्यवहारानुपपत्तिः
प्रतियोगिबोधकपदोपस्था प्यतावच्छेदकाव-
च्छिन्नप्रतियोगिता भाननियमेवाधकमाह
पीतघटवतीति, इतिव्यवहाराच्चेति, घटपदा
र्थतावच्छेदक शुद्धघटत्वावच्छिन्नाभावासत्वे
पिनीलपदसमभिव्याहारलभ्य नीलघटत्वरू
पान्वयितावच्छेदकावच्छिन्ना भावमादायतादृ
शव्यवहारस्यप्रमाणत्वाच्चेत्यर्थः, नकेवलंनञा
दिपदजन्यशाब्दज्ञान एवप्रतियोगितारूपसंस
र्गेप्रतियोगितासंसर्गा वच्छिन्नप्रकारतावच्छेद
कतापर्य्याप्त्यधिकरणपर्य्याप्तावच्छेदकता कत्व
भाननियमः, अपितुप्रतियोगितासम्बन्धेनप्र-
तियोगिप्रकारकज्ञानमात्रएव, उक्तरूपानवच्छि
न्नप्रतियोगित्वानिष्ठसांसर्गिकाविषयताया अप्रा
माणिकत्वादित्यवधेयं, नचैवंसकलसाध्याभा
ववन्निष्ठेत्यादिलक्षणे साध्यविशेषाभावमादा
याव्याप्तेर्वारणायसाकल्यस्य साध्यविशेषणात
यावर्णनविरोधइतिवाच्यंतत्रसाध्यस्याभावः सा
ध्याभावइतिषष्ठी तत्पुरुषजन्याभाववोधेषष्ठ्य

र्थप्रतियोगितायाः प्रकारत्वात्नतुसंसर्गत्वात्, ननुनञर्थाभावस्य प्रतियोगिनेवाधिकरणेना-पिसमंसंसर्गः संसर्गतयाभासते, नामार्थयोर्भेद नान्वयबोधः साक्षान्नसम्भवतीतिव्युत्पत्तौनिपातातिरिक्तत्वस्यनामविशेषणत्वात्, नञश्चनिपातत्वात्, अन्यथाप्रतियोगिताबोधकपदाभावात् घटोनास्तीत्यादौनञर्थाभावे घटादिप्रतियोगिकत्वभानानुपपत्तेः नपचतिचैत्रइत्यादौचैत्रादावभावाधारताबोधकानुयोगिवाचक पदोत्तर विभक्त्यभावेनपाककृत्य भाववांश्चैत्रइत्यादि बोधस्य, नायंघटइत्यादाविदमाद्यर्थेनञर्थघट भेदाद्यधिकरणतायाबोधस्यचानुपपत्तेश्च, न चभिन्नएवनञोऽर्थः नतुस्वातन्त्र्येणभेद;ः तस्यचानुयोगिन्यभेदान्वयोनतुभेदान्वयः अत एवायमघटः नघटइतिसमासव्यासयोराविलक्षणबोधजनकत्वानुभवोपि, एवञ्चपर्युदास-स्थलेभेदवत्तोगुरुतयानमुख्य नञर्थताअपि-तुलक्ष्यतैव, प्रतिषेधएवचनञोमुख्यार्थइतिश

---

(१) निपातातिरिक्तत्व स्यनामविशेषणत्वाभावे ।

ळपाण्यादिसम्मतमितिवाच्यं तथासतिसंस-
र्गाभावोऽन्योन्याभावश्चेतिविशिष्य द्वयोर्न्न
अर्थताकथनानुपपत्तेः एवंतादात्म्येनविशिष्ट
बुद्धौविशेषणताविशेषेणभेद प्रकारकधीरेव
विरोधिनीनत्वभेदसम्बन्धेन भेदवत्प्रकारक
धीरपि, गौरवात्तथासतिनायंघटइत्यादावधि
करणभेदस्य भेदान्वयानुपगमेतादृशवाक्य
जबुद्धेरयंघटइत्यादिवाक्यजबोधम्प्रत्यनुभावि
कीविरोधिताभज्येत. तथाचभूतलन्नघटइत्या
दौभूतलादावाधारतासम्बन्धेन घटादिसंस
र्गाभावबोधसम्भवादन्योन्या भावतात्पर्येण
वसंसर्गाभावतात्पर्य्येणापितथाप्रयोगः स्यात्
एवंभूतलेनघटइत्यादौ भूतलेघटसंसर्गाभा
वाधिकरणतावत्घटभेदाधिकरण ताकुतोन
प्रतीयतइत्यतआहप्रतियोग्यभावान्वयौचेति,
अधिकरणइत्यादिः अन्वयपदंसंसर्गभानपरं
तथाचाधिकरणेयादृशपदोपस्थाप्यस्य प्रतियो

---

( १ ) यत्रविशेष्यविशेषणयोरभेदान्वयस्तत्रनञाभेदोबोध्यत इति
भूतलेनघटइत्यादौघटादिभेदधीवारणंद्रष्टव्य ।

गिनः प्रतियोगितावच्छेदकसम्बन्धस्यभानं यादृशमधिकरणवोधकयादृशपदसमभि व्याहारसापेक्षंतादृशपदोपस्थाप्य प्रतियोग्यन्विताभावस्याप्याधाराधेय भावरूपसम्बन्धस्यभानंतादृशमधिकरणवोधक तादृशपदसापेक्ष श्चेत्यर्थ,ः अनुयोगिनीति, यादृशपदोपस्थाप्य इत्यादि,ः आधाराधेयभावसम्बन्धेनान्बयइति, आधाराधेयभावनियामकप्रतियोगितावच्छेदकसम्बन्धस्यसमबायादेः संसर्गमर्य्यादयाभानमित्यर्थ,ः तत्संसर्गाभावस्यापितथेति, तत्पदोपस्थाप्यप्रतियोगिविशेषित तत्सम्बन्धाबच्छिन्नाभावस्याधारता सम्बन्धोपिताहृश पदोपस्थाप्येऽनुयोगिनिसम्बन्ध मर्य्यादयाभासतइत्यर्थ,ः तिङाद्यर्थस्येति, नञोऽसत्वइत्यादिः आदिपदात्सुपःपरिग्रहःकृत्यादेरित्यादिना तिङर्थाश्रयत्वादिसुवर्थस्वत्वादिपरिग्रहः, प्रथमान्तपदोपस्थाप्यत्वस्याविशेष्यत्वनियामकत्वा भिधानंतिङर्थान्वयाभिप्रायेण, चैत्रस्यधनंपश्यतीत्यादौद्वितीयान्तपदोपस्थाप्येनापिधना दिना षष्ठ्याद्यर्थस्वत्वाद्यन्बयात् स्वार्थविशेष्यतयाऽन्ब

येप्रथमान्तपदोपस्थाप्य त्वस्यानियामकत्वा
त्, सुपश्चकारकपदोत्तरस्थयोऽर्थः तद्विशेष्यत्वे
धातूपस्थाप्यत्वंनियामकं, शेषषष्ठ्यर्थस्यविशे
ष्यत्वेचप्रातिपदिको पस्थाप्यत्वंप्रत्ययान्योप
स्थाप्यत्वंवा, गुरुविप्रतपस्विदुर्गतानांप्रतिकु
र्वीतभिषक्स्वभेषजैरित्यादौ प्रतीकारादिक्रि
यायामपितदन्वयात्, उपपदविभक्तयश्चयद्य
त्पदयोगेयाविहितास्तदर्थ विशेष्यत्वेतत्तत्पदो
पस्थाप्यत्वं, यथाचैत्रादन्यइत्यादावन्यादिपद
योगेऽनुशिष्टानांपञ्चम्यादीनामर्थस्य प्रतियो
गित्वादेर्विशेष्यत्वेऽन्यत्वादिनिष्ठेअन्यादि प-
दोपस्थाप्यत्वं, तत्रेति, अनुयोगिनीत्यर्थः त
था, आधाराधेयभावसम्बन्धेनान्वयइत्यर्थः त
दभावस्यापि, तिङाद्युपस्थापितकृत्याद्यभाव
स्यापि, तत्रतथा, प्रथमान्तपदोपस्थाप्यआधा
राधेयभावसम्बन्धेनान्वयइत्यर्थः, नपचतिचै
त्रेणेत्यादितश्चैत्रादौनञर्थस्याभाव स्यविशेष
णत्वेनानन्वयात्, नचैत्रेपाककृतिरित्यतइवचै

---

( १ ) एतेनप्रथमेऽ स्वरसोदर्शितः

त्रेनपचतीत्यादितश्चैत्रादिवृत्तित्व प्रकारेणपा-
कक्रुत्याद्यभावाबोधाच्चेतिभावः, चैत्रस्यधन
मित्यादौषष्ठ्याद्यर्थः स्वामित्वादिकंतच्चप्रकृत्य
र्थविशेषणतयाभासते स्वामित्वादिप्रकारेणचै
त्रादेरेवधनादौस्वत्वादिसम्बन्धेनान्वयः विभ
क्त्यर्थविशेष्यतापन्नप्रातिपदिकार्थस्य प्रातिप
दिकार्थेसाक्षादपिभेदान्वयोपगमात् नामार्थ
योर्भेदान्वयेप्रकारीभूत विभक्त्यर्थोपस्थितेस्त
न्त्रत्वात्, अथवाषष्ठ्याद्यर्थः स्वामित्वादिकंप्र
कृत्यर्थविशेष्यतयैवभासते धनादेस्तदनाश्रय
त्वेपिनिरूपकतासम्बन्धेनतत्रतदन्वय इतिप्रा
चांमतंदूषयिष्यन्स्वमतमाहषष्ठ्यादेश्चेति, आ
दिपदात्द्वितीयादिपरिग्रहः चैत्रादिनिरूपित
मिति, स्वत्वादिकमित्यादिनाकर्मत्वकृतिजन्य
त्वादिपरिग्रहः निरूपितत्वसम्बन्धेनचैत्रादिरू
पप्रकृत्यर्थान्वयीत्यर्थ,ः तन्निष्ठमिति, आश्रय
तासम्बन्धेनविशेषणतया चैत्रान्वयिआधेय-
तासम्बन्धेनचैत्रादिरूपविशेषणे नान्वयिवेत्य
र्थः स्वामित्वादीत्यादिनाकर्म्मत्वकर्तृत्वादिप
रिग्रहः तस्येति, चैत्रस्य चैत्रनिष्ठस्वामित्वादे

श्चेत्यर्थः धनाद्यवृत्तित्वेनेति, वृत्यनियामकस्व त्वनिरूपकत्वादिसम्बन्धेन धनादिसम्बन्धि-त्वेपिधनाद्यवृत्तितयेत्यर्थः धनादावाश्रयतास म्बन्धेनचैत्रादेस्तन्निष्टस्वामित्वादेश्चा भाव सत्वेनेतिशेष,ः प्रसङ्गात्, भवन्मतेऽबाधितता दृशचैत्राद्यभावबोधकस्येत्यादि प्रयोगस्यप्रा माण्यप्रसङ्गात्, ननुस्वामित्वादेः प्रकृत्यर्थवि शेष्यतापत्तेस्वामित्वादेर्न्निरूपकत्व सम्बन्धाव च्छिन्नाभावस्य, प्रकृत्यर्थविशेषणतापत्तेतादृ शिष्टप्रकृत्यर्थचैत्रादेः स्वत्वादिसम्बन्धावच्छि न्नाभावस्यनञप्रत्यायनो पगमान्नोक्तातिप्र-सङ्गावकाशः तादृशाभावस्यधनादौबाधादित्य तआहनिरूपकत्वादेरिति, आदिपदात्स्वत्वा-दिपरिग्रहः प्रतियोगितानवच्छेदकत्वादिति, वृत्यनियामकतयेत्यादिः वृत्यनियामकसम्ब-न्धावच्छिन्नसंसर्गाभावस्या प्रामाणिकत्वात्, येनहिसम्बन्धेनायमिहेतिप्रत्ययस्त त्सम्बन्ध मादायैवनायमिहेतिप्रत्ययः, निरूपकतासम्ब न्धेनधनेस्वामित्वमितिप्रत्यया भावान्तेनसम्ब न्धेननात्रस्वामित्वमितिप्रतीतेरप्यभावः अत

एवंधनमात्रेस्वामित्वमात्रस्याश्रयता सम्बन्धा
वच्छिन्नाभावसत्वेन तत्तद्देशवृत्तित्वायोर्नीलरू
पाभावइतिवद्चैत्रीयधनेन चैत्रनिष्ठंस्वामित्व
मितिधनेऽचैत्रीयत्वस्यस्वामित्वेचचैत्रनिष्ठत्व
स्याव्यावर्तकतयानव्ययत्वह्यते अपितुधनेन-
स्वामित्वमित्येव, अन्यथानिरूपकतासम्बन्धा
वच्छिन्नस्वामित्वाभावतात्पर्य्येण तथाप्रयोग
स्यदुर्वारतापत्तेः अतएवचकृतिमत्वरूपकर्तृत्व
सम्बन्धस्यवृत्त्यनियामकतया नपचतीत्यत्रैत-
त्सम्बन्धावच्छिन्नक्रियाभाव बोधासम्भवेनप
चतीत्यादौकृतिमत्वसम्बन्धेनपाकादेः कर्तर्य
न्वयबोधंमणिकारोनोपजगामउपजगामतुजा
नातीत्यादावाश्रयतासम्बन्धेन ज्ञानादेरिति
भावः वृत्त्यनियामकसम्बन्धावच्छिन्नप्रतियो
गिताकाभावस्वीकारेस्वत्व सम्बन्धावच्छिन्नचै
त्राभावचैत्रस्वत्वाभावयोः समनियततयाऽभि
न्नत्वेनाभावकल्पनाधिक्य विरहेप्यतिरिक्तप्र-
तियोगिताकल्पनाधिक्या द्गौरवमित्यपिबोध्यं,
यत्रचेति, ययोरित्यर्थः नसंसर्गमर्य्यादयाल
भ्यइति, भेदान्वयेनिराकाङ्क्षतयाइत्यादिः

तादृशौचप्रातिपदिकार्थौ, तत्रेति, तत्पदार्थेत
त्पदार्थसंसर्गाभावबोधेऽनुयोगिवाचक पदोत्त
रंसप्तम्यपेक्षेतितत्राभावसम्बन्धस्या धारतारू
पस्यसंसर्गत्वासम्भवेनतदर्थक विभक्तिंविना
तज्ज्ञानासम्भवादितिभावः अत्रभूतलघटाभा
वयोस्साक्षाद्भेदान्वयबोधस्या प्रसिद्धयातत्सा
मग्र्याअकल्पनात् भूतलन्नघटइत्यादिवाक्या
न्नतादृशशाब्दबोधापत्तिः यदिचघटाभावादि
विशिष्टभूतलादिपरतदादिपद घटितात्तदस्ती
तिवाक्यात्भूतलाद्यंशेघटाद्यभाव प्रकारक-
बोधः प्रसिद्धइत्युच्यतेतदातादृशबोधोत्पत्तौ
तादृशवाक्यज्ञानतद्घटकतदादि पदजन्यता
दृशविशिष्टार्थोपस्थित्यादिघटित सामग्र्याएव
प्रयोजकत्वान्तदभावादेव नोक्तस्थलेतदुत्पा
दप्रसङ्गः भूतलेनघटइत्यादौप्रसिद्धोबोधश्चघ
टाद्यभावेभूतलादिवृत्तित्वप्रकारकः तदुत्पादि
काचसामग्री, परस्परसमभिव्याहृतप्रथमान्त
घटादिपदनञ्पदजन्यघटादि तदभावोपस्थि
तिभ्यामिवतत्तत्पदसमभिव्याहृत सप्तमीज-
न्याधेयत्वोपस्थितितत्प्रकृतिजन्यभूतलोपस्थि

त्यादिनापिघटिता, भूतलन्नघटइत्यादौतदभा
वादेवनतदुत्पादप्रसङ्गः एवन्नपचतिचैत्रइत्या
दौप्रसिद्धस्यचैत्रादिविशेष्यक पाककृत्याद्य
भावप्रकारकबोधस्य सामग्रीप्रथमान्तपदज-
न्यानुयोग्युपस्थितिविभक्तिजन्य कृत्यादिरूप
प्रतियोग्युपस्थितिघटिता तदभावात्पाककृति
र्न्नचैत्रइत्यादौनतत्प्रसङ्गः एवंपाककृतिर्न्नचैत्र
इत्यादिस्थलप्रसिद्धस्या भावांशेचैत्रादिवृत्ति
त्वप्रकारकबोधस्याप्युक्तरीत्यो वारणमितिबो
ध्यं, ननुसप्तम्यन्तभूतलादिपदेननञर्थाभावे
आश्रयतासम्बन्धेन भूतलवृत्तित्वबोधनतादृश
पदेननेदंचैत्रस्येत्यादौ षष्ठ्याद्यन्तपदेनेवप्रथ
मान्तार्थविशेषणनञर्थाभावेपि कदाचित्प्रति
योगितयास्वार्थान्वयबोधजननात् घटाभावो
भूतलेभूतलवृत्तित्वाभाववान् घटइतिद्विविध
एवभूतलेनघटइत्याद्याकारक वाक्यजबोधः
एवञ्चतादृशवाक्यात्कदाचित्प्रथमोबोधः क-
दाचिच्चद्वितीयइत्यत्रकिंनियामक मित्याकाङ्
क्षायान्तात्पर्यभेदस्य तन्नियामकत्वमाहअत्र
चेति, अत्र, भूतलेनघटइत्यादिवाक्यस्थले,

ननुसर्वत्रसप्तम्यन्तार्थस्या भावनिष्ठतयैवान्व
योस्तुनतुकदाचिदपितत्प्रतियोगितया, विनि
गमकञ्चाग्रेव्यक्तीभविष्यतीत्यतआह अतएवे
ति, कदाचित्सप्तम्यन्तार्थप्रतियोगिकाभाव-
स्यापिनञाबोधनादेवेत्यर्थः इत्यादौ, इत्यादि
द्वित्रिवाक्ये, प्रतीतेरेकविशेष्यकत्वानुभवः ग
न्धाद्येकविशेष्यकप्रतीतिजनकत्वानुभवः न
जलइत्यतोगन्धाभावस्यैव जलवृत्तित्वबोधोप
गमेतत्प्रतीतावभावस्यैव विशेष्यतयापृथिव्यां
गन्धइत्यतश्चतद्विशेष्यक बोधानुत्पत्त्यातयोरे
कविशेष्यकबोधजनकत्वानु भवोविरुध्येतेति
भावः । नञर्थाभावनिष्ठाधेयताबोधकत्वंसप्त
म्याःखण्डयतांमतमुपन्यस्यस्यतिकेचित्त्विति,
विशेष्येविशेषणस्याभावइति, नञोऽसत्त्वेयत्प
दार्थेयत्पदार्थोविशेषणतयाभासते तत्रनञात
त्पदार्थेतत्पदार्थाभावो विशेषणतयाप्रत्याय्यत
इत्यर्थः तथाचभूतलेघटइत्यतोघटेभूतलवृत्ति
त्वस्यविशेषणतयाबोधात् भूतलेनघटइत्यतो
पिघटेभूतलवृत्तित्वाभावएवविशेषण तयाप्र
तीयतेनतुघटाभावेभूतलवृत्तित्वं, एकाकार

वाक्यस्यद्विविधबोधजनकत्वो पगमेनञ्पदेस
सम्यन्तभूतलादिपदसमभिव्याहार ज्ञानस्य-
द्विविधकारणत्वकल्पनापत्तेः उभयसाधारण
तत्कार्यतावच्छेदकैकस्य कथञ्चित्सम्भवेपिता
दृशवाक्यधर्म्मिकद्विविध वाक्यार्थतात्पर्य्यज्ञा
नस्यपृथक्कारणतयाकारणता धिक्यस्यदुर्वा
रत्वादितिभावः एतन्मतेयुक्त्यन्तरमाहअत
एवेति, घटोऽस्तीत्यादाविवेति, आदिनाघटौ
स्तः घटास्सन्तीत्यादिपरिग्रहः वचनैक्यनिय
मइति, विशेष्यविशेषणपदयोः समानवचन
त्वनियमेनसुपतिङोर्वचनसाम्य नियमइत्यर्थः
भूतलेघटोनास्तीत्यादावभावस्यभूतलाद्यास्ति
त्वविशेष्यत्वेतदैक्येनघटौनस्तइत्यादौ द्विवच
नाद्यनुपपत्तेरितिभावः 'नचैतन्मतेपिघटोना-
स्तिघटौनस्तइत्यादावाख्यातार्थस्य प्रतियोगि
तयाऽभावविशेषणत्वमेव नतुघटविशेषणत्व-
मितिकथमाख्यातान्तस्यघटादि पदसमानव
चनत्वनियमइतिवाच्यं विशेषणपदस्यसाक्षा
त्स्वार्थविशेष्यपदेनवस्वार्थं विशेष्यनिपातार्थ
विशेष्येपदेनापिसमानवचनत्वे नियमइत्याश

यात्नचघटौनस्तइत्यादावस्तित्वाभावस्य घटा
दौबोधपक्षेएकघटवतिघटौनस्त इतिव्यवहा
रोनस्यात्घटेतद्देशास्तित्वसत्वे द्वित्वाद्यवच्छि
न्नेपितत्रतदभावासत्वादितिवाच्यं द्वित्वाद्य
वच्छेदेनप्रतियोग्यसत्वेप्रतियोगिमत्यपितद-
वच्छिन्नेतदभावइत्यस्य एतद्वादिनोपगमात्
। केचित्तुअत्रघटौनस्तइत्यादौघटद्वयत्वादिसा
मानाधिकरण्येनैतद्देशास्तित्वाभावः प्रतीयते,
यत्रचैकएवघटस्तत्रताद्दशद्वित्व सामानाधि-
करण्येनघटान्तरेणतद्देश वृत्तित्वाभावस्याभा
वादत्रघटौनस्तइतिवाक्यस्य योग्यतानचैवंय
त्राधिकरणेघटद्वयंवर्तते तदधिकरणास्तित्वा
भावस्यापिघटपर्याप्तद्वित्वाश्रय तद्देशावृत्तिघ
टान्तरेसत्वात्तदधिकरणपरमत्रघटौनस्तइति
वाक्यंप्रमाणंस्यादितिवाच्यं घटपर्याप्तद्वित्वत्वा
वच्छेदेननञर्थाभावसामानाधिकरण्य भानो
पगमात्यत्रदेशेयत्किञ्चित् घटद्वयसत्वंतद्घट
द्वयाद्वित्वेतद्देशवृत्तित्वाभाव सामानाधिकरण्या
सत्वेननघटपर्याप्तद्वित्वत्वा वच्छेदेनतद्देशवृत्ति
त्वाभावसामानाधिकरण्यमिति तद्बोधकताद्द-

शब्दवाक्यस्यप्रामाण्याप्रसक्तेरित्याहुः तच्चि-
न्त्यं, तादृशद्वित्वेतद्देशास्तित्वाभावसामाना
धिकरण्यभानं हि धर्म्मिता वच्छेदकतादृशद्वि
त्वप्रकारेणभासमानेधर्म्मिणि तादृशाभावरू
पविशेषणसम्बन्धभानं नतुतादृशद्वित्वेतादृ-
शाभावाधिकरणवृत्तित्वस्य प्रकारतयासंसर्ग
तयावाभानं, तत्रतथातद्भासकाभावात्तथाच
तादृशद्वित्वत्वेतादृशाभावसामानाधिकरण्याव
च्छेदकत्वस्यतत्सामानाधिकरण्ये वातादृशद्वि
त्वत्वावच्छिन्नत्वस्यभानमप्रसक्तमेव, एकदे
शवृत्तिधर्म्मस्यद्वित्वाद्यवच्छेदेन भानोपगमे
त्वत्रघटौनस्तइत्यादि वाक्यादुक्तद्वित्वत्वाव
च्छेदेनतद्देशास्तित्वाभावावच्छेदकत्व भानोप
गमात्घटद्वयाधिकरण देशास्तित्वाभावस्यत
दधिकरणावृत्तिघटसाधारण द्वित्वावच्छेदेन
सत्वेपिनातिप्रसङ्गः तादृशद्वित्वत्वावच्छेदेना
भावावच्छेदकत्वभानञ्चा भावरूपविशेषणध-
र्म्मितावच्छेदकता वच्छेदकतादृशद्वित्वत्वाव
च्छिन्नावच्छेदकताकत्व रूपधर्म्मितावच्छेदका
वच्छिन्नत्वभानंतच्चसम्भवत्येवावच्छेदकावच्छे

देन्नाविशिष्टबुद्धौ धर्म्मितावच्छेदकावच्छेद्यता
याविशेषणेभानस्यसर्वसम्मतत्वात्, यद्यप्युक्त
युक्त्यात्रघटोनास्ति अत्रघटौनस्तइत्यादावभा
वेऽस्तित्वादिक्रियान्वयएवखन्डयितुं शक्यतेन
त्वत्रघटोनइत्यादावभावेसप्तम्यर्थान्वय, स्तथा
पिक्रियांविनानवाक्यसमाप्तिरितिअत्र नघटइ
त्यादावप्यस्तीत्यध्याहारेणातिङन्तार्थस्यैवभावे
ऽन्वयइत्यभिप्रेत्यैवतदभिहितं, अस्तीत्यस्यस-
मभिव्याहारेचाधारसप्तम्यानिरूपि तत्वमर्थः
वृत्यर्थकधातुयोगेनिरूपकस्यैवाधारत्वात्, भूतले
वर्त्ततेभूतलेऽस्तीत्यादेः समानार्थतयावृत्तिरस्त्य
र्थः । गतिश्चिन्तनीयेति, सत्ताशब्दस्यसत्तास
मवायेसत्ताप्रतियोगिकत्व विशिष्टसमवायानु
योगित्वेवालक्षणयोपपत्तिप्रकार श्चिन्तनी
य,ः यथाश्रुतार्थेऽनुपपत्तिंदर्शयतिजातीति, अ
प्रसिद्धेरिति, तदभावस्यसत्तायांनञाबोधयितु
मशक्यत्वादितिशेष,ः इदञ्चात्रसमवायेनवृत्तेः
सप्तम्यर्थत्वेवोध्यंवृत्तिसामान्यस्य सप्तम्यर्थत्वो
पगमेऽप्रसिद्धिविरहेणतत्पक्षेबाधकमाहसम्बन्धा

न्तरेणेति, एकार्थसमवायेनेत्यर्थः गुणकर्मान्य
त्वविशिष्टसत्तात्वादिनासत्तादौ गुणादिवृत्ति
त्वानुपगमेगुणेनविशिष्टसत्तेत्यादावपि विशिष्टनि
रूपिताधिकरणत्वेलक्षणायायोग्यत्व मुपपादनी
यं, अथविशिष्टसत्तेतिवाक्यमेव नतुपदमितित
च्छक्याप्रसिद्ध्यालक्षणायाअसम्भव इतिचेत्
भावप्रत्ययान्तसत्ताशब्दस्यापि वाक्यतयाजा-
तौनसत्तेत्यत्रापिसत्तासमवाय लाभानुपपत्तिः
यदिचभावप्रत्ययस्यसाधारणधर्म्मरूप शक्या
र्थसमवायादौलक्षणोपेयतेतदात्रापि भावप्रत्य
यस्यैवविशिष्टनिरूपिताधिकरणतायां लक्षणा
स्वीकरणीयेति, मतान्तरमाहसप्तम्यर्थेति, भूत
लेघटोनास्तिजातौनसत्तास्तीत्यादौ भूतलजा
त्याद्यस्तित्वरूपसप्तमीसमभिव्याहृतक्रियापद
पर्य्यन्तार्थस्याश्रयतयान्वयीयोऽभावः प्रतियो-
गितासम्बन्धेनप्रकारीभवतस्तस्यप्रति योगिन्य
न्वयइत्यर्थः एवञ्चपरम्परयाक्रियाविशेष्यप्रति
योगिवाचकघटादिपद समानवचनत्वंक्रियापद

---

[ १ ] स्वसमवायिसमवेतत्वेनेत्यर्थः

स्यनिर्वहतीतिद्रष्टव्यं येनरूपेणप्रतियोगिनो
विशेषणत्वंतद्रूपावच्छिन्नत्व विशेषितवप्रति
योगिता, सम्बन्धतयाभासतेऽतोघटादिमति
विशेषाभावमादायात्र घटोनास्तीत्यादयोनव्य
वहारा,ः अवच्छिन्नत्वञ्चनान्यूनवृत्तित्वंअपितु
स्वरूपसम्बन्धविशेषः तेनवह्न्यादिमतितार्ण
तार्ण वह्निनस्तइतिवत्ताद्दशाभावमादायात्रव
ह्निर्नास्तीत्यादयोनव्यवहाराः नवागुणान्यत्व
विशिष्टसत्तात्वाद्यव च्छिन्नाभावमादायगुणा
दौसत्तानास्तीत्यादयः, अभावेप्रतियोगिनोऽ
न्वयितावच्छेदकावच्छिन्नप्रतियोगिता कत्व
स्यसंसर्गतापक्षेपीदृशातिप्रसङ्गस्यतथैव वार
णीयत्वात्, अत्रचाभावेऽनुयोगितासम्बन्धेन
प्रतियोगिप्रकारको घटोनास्तीत्यादिरेवप्रत्यय
आनुभविकः नतु प्रतियोगिनिप्रतियोगितास
म्बन्धेनाभाव प्रकारकोऽभावीयोघटइत्यादिः
अथैवंप्रतियोगिन्यभावस्य प्रतियोगितासम्ब
न्ध एवनस्यादितिचेत्काक्षतिःनञ्पदघटित
वाक्यात्प्रतियोगिन्यभाव प्रतियोगिताप्रका
रकबोधश्चनसम्भवति प्रतियोगितायाअपदा

र्थत्वात् नचनञ्पदोत्तरविभक्तिरेव प्रतियोगि
त्वार्थिका, तत्कल्पनेगौरवात् प्रथमाविभक्तेः
संख्यातिरिक्तार्थपरत्वेऽसाधुत्वात् निपातोत्त
रविभक्त्यन्तरानुदयात् तदनिश्चयेपिशाब्द
बोधस्यानुभवात्प्रतियोग्यभावयोः सम्बन्धं
सम्बन्ध विधयाऽवगाहमानस्यैवज्ञानस्यलाघ
वेन प्रतियोगिविशिष्टधीविरोधितयाजातौन
सत्तेत्यादि वाक्याज्जातिधर्म्मिकसत्तासंशया
दिनिवर्तक ज्ञानानिर्वाहश्चेत्यस्वरसः; यत्रन
ञोऽसत्वे प्रतियोग्यनुयोगिनोर्य्यस्सम्बन्धो
भासतेतत्रैवनञातत्सम्बन्धा वच्छिन्नप्रति
योगिताकस्तदभावः प्रत्याय्यतइतिव्युत्पत्त्य
नुसारेण भूतलेनघटइत्यादितोभूतलादौघटा
द्यन्योन्याभावबोधंवारयतियत्रचेति, यादृशप्र
तियोग्यनुयोगिवाचक पदसमभिव्याहारस्थ
लइत्यर्थःविशेषणविशेष्ययोः, प्रतियोग्यनुयो
गिनोः, अभेदेन, तादात्म्यसम्बन्धेन, अन्वयः,
विशेषणविशेष्यभाव,ः तत्र, तत्रैव, अन्योन्याभा
वोनञावोध्यतइति, तस्यतादात्म्यसम्बन्धाव
च्छिन्नप्रतियोगिताकत्वादितिभावः एवञ्चभू

तलेघटइत्यादौघट भूतलाद्योस्तादात्म्याप्रती
तेर्भूतलेनघटइत्यादौनभेदबोधइतिसूचितं, अ
यंघटोनीलइत्यादिःप्रतियोग्यनुयोगिनोरभेदा
न्वयोदाहरणं, नायंघटोनीलइत्यादिरन्योन्या
भावबोधोदाहरणं, भूतलेघटइत्यादावेवकथन्न
घटभूतलाद्योरभेदबोधइत्यतआहतत्रेति, ना
मार्थयोरभेदबोधइत्यर्थः समानविभक्तिकता
विरहेपिस्तोकंपचतीत्यादौस्तोक पाकाद्योरभ
दबोधान्नस्तोकंपचतीत्यादौपाकादि क्रियायां
स्तोकभेदबोधान्नामार्थयोरित्युक्तं, समानविभ
क्तिकत्वमेकजातीयविभक्त्यन्तत्वं, एकजातीय
त्वञ्चप्रथमात्वद्वितीयात्वाद्यन्यतमरूपेण नत्वा
नुपूर्व्या,ऽतोवेदाः प्रमाणमित्यादावप्यभेदान्व
यबोधः, नीलघटइत्यादिसमाससाधारण्यायाा
हविरुद्धेति, विशेष्यपदेयज्जातीयविभक्तिराहि
त्यंविशेषणपदेपितज्जातीयविभक्तिराहित्यं, न
तुविशेष्यपदप्रकृतिक विभक्तिविजातीयविभ
क्तिराहित्यंविशेषणपदे, नीलघटरूपमित्यादि
तोनीलघटाद्यभेदबोधानुपपत्तेः घटादिपदान
न्तरविभक्तेरप्रसिद्धेः विशेष्यपदानन्तरकाली

नावृत्तिप्रथमास्वाद्यन्यतमरूपवद्विभक्ति राहि त्यम्वाविवक्षितं, इदन्तुचिन्त्यतेविरुद्धविभक्ति राहित्यंनस्वरूपसदपेक्षितं, विरुद्धविभक्तिकयोर पिसमानविभक्तिकत्वभ्रमेऽभेदबोधात्, समा नविभक्तिकयोरपिविरुद्ध विभक्तिकत्वभ्रमेऽभे दाबोधात्, नापिज्ञातं, विरुद्धविभक्त्यनुपस्थि तिदशायांविरुद्धविभक्तिराहित्याज्ञाने पिनीलो घटइत्यादावानुपूर्व्वी विशेषप्रकारेणभासमाना यास्वादिविभक्तिः विशेष्यविशेषणपदयोस्तद न्तत्वरूपानुपूर्व्वीज्ञानात्नील घटइत्यादौचनील पदाव्यवहितघटपदत्वादिरूपानुपूर्व्वीज्ञानान्नी लघटाद्योरभेदान्वयबोधात् तस्मात्तादृशतादृ शानुपूर्व्वीज्ञानानामननुगतानाम पितदानन्त र्य्यघटितधर्म्मावच्छिन्नम भेदान्वयबोधम्प्रति हेतुता, दीधितौवाकारोनास्थासूचकइतियुक्त मुत्पश्यामः, ननुप्रतियोग्यनुयोगिपदयोःप्रथ मान्तत्वमेवनामार्थेनामार्थभेदबोधेतन्त्वंकिन्नो च्यतेतावतैवभूतलेनघटः नीलेनघटइत्यादौभे

(१) अन्यथापरस्परवीयेव्यभिचारःस्यात् ॥

दधीबारणासम्भवादित्यतआहअतएवेति,प्रति
योग्यनुयोगिपदयोः प्रथमान्तत्वमुपेक्ष्याभेदा
न्वय बोधप्रयोजकतत्तत्समभिव्याहारस्यान्यो
न्याभावबोधेतन्त्रतोपगमादित्यर्थः, नानुया
जेष्वित्यादाविति, प्रतियोग्यनुयोगिवाचकपद
योः प्रथमान्तत्वाभावेप्यभेदान्वयप्रयोजकसमान
विभक्तिकतामात्रेणनञेतिशेषः यजतिष्वनुयाज
भेदोबोध्यत इत्यनेनाभिसम्बन्धःसुबन्तोपिय
जतिशब्दोयागरूपधात्वर्थवाचकः ईक्षतेर्नाश
ब्दमित्यादौताद्दशेक्षत्यादिपदमिव ज्ञानादिबो
धकं, ननुयेयजामहमित्यादेरनुषङ्गेणनानुयाजे
ष्वित्यनेनानुयाजेषुयेयजामहन्न करोतीत्येव
प्रत्याय्यते तथाचरात्रौश्राद्धन्नकुर्वीतेत्यत्रयथा
रात्रिश्राद्धकरणे आख्यातार्थेष्टसाधनत्वाभा
वोनञ्प्रतिपाद्यस्तथाप्रकृतेपि,विध्यर्थकातिबर्थ
स्येष्टसाधनत्वादेरत्यन्ताभावएवयेयजा महा
दिमन्त्रपाठकरणेनञ्प्रतिपाद्यः, नतुयजाति
ष्विनुयाजभेद, इत्याशङ्कान्निराकरोतिएक

(२) प्रथमान्तप्रतियोग्यनुयोगिवाचकपदसमभिव्याहारस्य

वाक्यत्वानुरोधादिति, अन्यथावाक्यभेदेनगौर
वादितिभावः तदुक्तंसम्भवत्येकवाक्यत्वेवाक्य
भेदोहिनेष्यतइति, गौरवान्तरमप्याहयेयजाम
हमिति, ननुभेदप्रतियोगितयाऽनुयाजान्वयेऽ
नुयाजपदोत्तरसप्तम्यावैयर्थ्यप्रसङ्गः तयाधारत्व
रूपस्वार्थाबोधनादित्यत आह विशेषणेति,यथा
ऽनुयाजेषुयजतिष्वित्यादौतादात्म्य सम्बन्धे
नसान्नाय्यजत्यादि विशेषणानुयाजार्थकपदोत्त
रविभक्तेर्नाधारत्वाद्यर्थपरत्वमपितुनि र्विभाक
कप्रातिपदिकस्यासाधुतयासाधुत्वार्थकतैव,तथा
नानुयाजेषुयजतिष्वित्यादावप्यन्तरा भासमा
ननञर्थद्वारायजति विशेषणार्थकानुयाजपदो
त्तरविभक्तिः साधुत्वमात्रार्थेत्यर्थःनचैवंपदसा
धुत्वायघटोननीलइत्यादौनीलादिपदोत्तरामिव
प्रकृतेप्रथमैवस्यान्नतुसप्तमी तिवाच्यमभेदेनसा
न्नाद्विशेष्य विशेषणभावापन्नार्थकयोरिवनञ
र्थभेदद्वारा विशेष्यविशेषणभावापन्नार्थकयो
रपिप्रातिपदिकयोस्समान विभक्तिकतानियमे
नप्रकृतेप्रथमायाअप्रसक्तेः ननुघटःकर्मत्वामि
त्यादौघटकर्मत्वादीनामा धाराधेयभावादि

नाऽनन्वयान्नामार्थेनामार्थस्य विभक्त्यर्थप्रका
रेणैवतत्सम्बन्धेनसाक्षादन्वयः विभक्त्यर्थम
न्तराकृत्वैववाऽन्वय इतिव्युत्पत्तिरुपगन्तव्यात
थाचघटोनीलः अनुयाजेषुयजतिष्वित्यादितः
प्रतियोग्यनु योगिनोरभेदान्वयासम्भवात्घ
टोननीलः नानुयाजेषुयजतिष्वित्यादौघटया
गादौनीलानुयाजादिभेदोनञाकथंबोधनीयइ
त्यतआहनामार्थयोरिति, भेदेनान्वयबोधइ
ति, आधाराधेयभावादिसम्बन्धेनान्वयबोधइ
त्यर्थःप्रकारीभूतविभक्त्यर्थोपस्थितेरिति, वि
शेषणीभूतनामार्थेप्रकारतयाताद्दशसम्बन्धभा
नप्रयोजिकायाविभक्तिजन्यतदुपस्थितेरित्यर्थःए
तच्चघटेकर्मत्वमित्यादौविभक्त्यर्थाधारत्वादिवि
शेषितस्यघटादेराधेयतादि सम्बन्धेनकर्म्मत्वा
दावन्वयइतिप्राचीनमतानुसारेणोक्तं, अन्य
थाताद्दशबोधाप्रसिद्धेरसङ्गत्यापातात्, नामार्थ
योस्साक्षाद्भेदान्वयोन भवत्येवभवतितुविभ
क्त्यर्थमन्तराकृत्वेतिव्युत्पत्तिः घटेकर्म्मत्वमि
त्यादौघटादिविशेषिताधेयत्वादिरूपविभक्त्यर्थ
स्यैवकर्म्मत्वादौप्रकारतयाभाना दितितुतत्वं

अन्यथासप्तम्याद्यर्थाधारत्वादिविशेषितप्रकृत्य
र्थस्याधेयत्वादि सम्बन्धेनापरनामार्थेऽन्वयेन
भूतलमभिव्याहारस्थलेऽाधेयत्वादि सम्बन्धा
वच्छिन्ननामार्थाभावस्यैवापरनामार्थेभानस्यो
पेयतयावृत्त्यानियामकसम्बन्धस्यात्यन्ता भाव
प्रतियोगिता वच्छेदकताविरहेणातदसम्भवाद
सामञ्जस्यमापद्येत, वस्तुतोनामार्थयोरन्वयबो
धइत्यत्रसाक्षादन्वयबोधोनाविवक्षितः अपितु
नामार्थप्रकारतानिरूपितनामार्थ विशेष्यताक
बोधएव,निरूपितत्वञ्चसाक्षात्परम्परासाधारणं,
प्रकारीभूत विभक्त्यर्थोपस्थितेस्तन्त्रत्वादित्य
स्यचविशेष्यीभवन्नामार्थ प्रकारतयाप्रकारी
भवन्नामार्थाविशेष्य तयाऽर्थान्तरभासकाविभ
क्तिजन्यतदुपस्थित्यादेस्तन्त्रत्वादित्यर्थःनामा
र्थविशेष्यकाभेदान्यसंसर्गकतत्प्रकार कान्वय
बोधएवविभक्तिजन्यतदुपस्थिते र्हेतुत्वादिति
पर्य्यवसितार्थःईदृशकारणवाधान्नामार्थे ना
मार्थस्यसाक्षादभेदातिरिक्त सम्बन्धेनप्रकार
त्वं.एवञ्चअभेदान्वयएवोक्तव्युत्पत्तेर्य्यजतिष्वनु
याजेष्वित्यादावभेदसम्बन्धेनानुयाजादेर्य्यागा

दिविशेषणत्वेबाधकाभावान्वानुयाजेषु यजति
ष्वित्यादौयागादावनुयाजादिभेदबोधो निरप
वादएवेतिभावः येषांमतेनीलंघटमानयेत्यादौ
विशेषणविभक्तेः सार्थकत्वायतस्याभेदार्थक
त्वंनतुनीलघटाद्योस्तादात्म्यसंसर्गः तन्मतेन
ञानामार्थेनामार्थरूपप्रतियोगि विशेषितभेदो
बोधयितुंनशक्यतइति तन्मतनभवत्येवतद्बो
धःअपितुनामार्थविशेषितविभक्तयर्थाभेदाभा
वएवनेदंचैत्रस्येत्यादौचैत्रस्वत्वाद्य भाववन्नञा
प्रत्याय्यते,एवञ्चनञाभेदे नशक्तयन्तरमपितु
अनीलोघट इत्यादावनीलादिपदेनविभक्तय
र्थाभेदविशेषणतयानीलादि भिन्नस्यबोधानु
रोधेनभेदवानेवलक्षणयानञर्थः अत्यन्ताभा
वापेक्षयाऽन्योन्याभाव विशिष्टस्यधर्म्मिणोगु
रुतयाविनिगमकत्वेन तत्रशक्तयसिद्धेरि
त्याहलाघवेनेति, उक्तकार्य्यकारणभावेअभेदा
तिरिक्तसंसर्गकत्वानिवेशादित्यादिःतयोः, ना
मार्थयोः, अन्वयबोधमात्रे,भेदाभेदसाधारणा
न्वयबोधसामान्ये, तथात्वं,अन्तराभासमान
विभक्तयर्थोपस्थितेस्तन्त्रत्वं, तथाच्नामार्थयो

रभेदेनापिनसाक्षादन्वयबोध इतिभावःनन्वे
वंनीलोघटइत्यादौ नीलघटाद्योरभेदबोधानु
पपत्तिः अभेदोपस्थापकविभक्तयसत्वादित्या
शङ्कांनिरस्यतिविशेषणविभक्तिरिति, विशेष
णपदोत्तरविभक्तिरित्यर्थःअभेदार्थिकेति, अ
भेदेप्रथमाविभक्तेरनुशासन विरहान्नतदर्थक
त्वसम्भवइतिनशङ्क्यं विशेषणपदेविशेष्यपद
समानविभक्तिकत्वानुशासनसत्वात् अन्यथा
अभेदसंसर्गतामतेपि विशेषणपदोत्तरद्वितीया
यादेः कर्मत्वाद्यबोधकतयानुशासनिकत्वानु
पपत्तेः तदनुशासनस्यैवाभेदार्थताग्राहकत्वो
पगमात्, नन्वेवंनीलोत्पलमित्यादिसमासवा
क्यान्नीलोत्पलाद्योरभेदबोधोन स्यात्तदर्थकवि
भक्तिविरहादित्यतआहनीलेति,चित्रगुरिति,
यद्यपिचित्रगुरित्यादि बहुब्रीहिसमासेगवादिप
दमेवचित्रगवादि सम्बन्धिनिलाक्षणिकंपूर्वपदं
तात्पर्य्यग्राहक मितिचित्रादिपदोत्तरलुप्तविभ
क्त्यनुसन्धानमनर्थकं, तथापिपूर्वपदस्यानिरर्थ
कत्वेसमस्यमानपदयोःसार्थकत्वघटितसामर्थ्या
नुपपत्त्यासमासानुपपत्तेःउत्तरपदंपूर्वपदार्थात्रि

शेषितस्वार्थसम्बन्धिन्येवलाक्षणिकं पूर्वपदसम
भिव्याहारादेवतदर्थाभेदोलक्ष्यार्थैकदेश भूते
उत्तरपदमुख्यार्थेव्युत्पत्तिवैचित्र्याद्भासत इ
त्याशयेनचित्रगुरित्यादौ चित्रादिपदोन्तरविभ
क्त्यनुसन्धानाभिधानंनचारूढवानरोवृक्ष इ
त्यादिबहुब्रीहौ समस्यमानपदार्थयोरभेदभा
नेनवानरकर्तृकारोहणकर्मत्वादिनावृक्षा दिभा
नंवानरादिपदस्यतेनरूपेणलक्षणां विनाननिर्व
हतीत्यारोहणादिरूपपूर्वपदार्थघटि तोक्तरू
पेणान्तरपदलक्षणायाआवश्यकत्वात्समस्यमा
नपदद्वयार्थान्वयस्यसमासनियामकत्वानुप प
त्तिरितिवाच्यं तत्रोक्तलक्ष्यार्थघटकवानरादा
वप्यारूढादिपदार्थस्याभेदभानोपगमात्, अ
भेदस्याभावोबोध्यतामिति,तावतापियजातिष्वि
त्यादावेकवाक्यत्वाक्षतेरितिभावः अभेदाभाव
स्यनञाबोधनेयजातिष्वित्यादौपर्युदासएव, अ
भावस्याविधेयतयाप्राधान्याभावेन प्रसज्यप्रति
षेधत्वाभावात् अप्राधान्यंविधेर्य्यत्रप्रतिषेधप्रधा
नता ॥ प्रसज्यप्रतिषेधोसौक्रिययासहयत्रनञ्इ
तिप्रसज्यप्रतिषेधलक्षणात्, अथैवमयमश्राद्ध

भोजीअसूर्य्यम्पश्यराजदाराइत्यादौनञः स
मासनिविष्टस्यभिन्नार्थकतयाभिन्नाभेदस्यत्व
बिभक्त्यन्तार्थस्याबिधेयतयानञर्थाभावस्या
प्राधान्येनप्रसज्यप्रतिषेधत्वानुपपत्तिरितिचेन्न
वतुतत्रपर्य्युदासएव,श्राद्धभोजन सूर्य्यदर्शना
दिरूप क्रियाकर्तृभिन्नाभेदस्याबिधेयत्वेतादृ
शक्रियाकर्तृभिन्नभेदस्यतादृशक्रियाकर्तृत्व रू
पतयाश्राद्धंनभुङ्क्तेसूर्य्यमपिनपश्यन्तीत्या दि
स्थलीयतादृशक्रियाकर्तृत्वाभावरूपबिधेय प
र्य्यवसानेन प्रसज्यप्रतिषेधतुल्यतयाचतथाव्य
वहारः अतएवपर्य्युदासस्थलएवनञ्तत्पुरुषः
अत्रबादिनामबिवादइत्यत्राभावस्यप्राधान्येना
समस्तएवनञ्समानार्थोऽशब्दइतिवदन्ति, सू
र्य्यम्पश्यशब्देननञ्समासादेवसूर्य्यंनपश्यन्ती
त्यर्थपर्य्यवसानात्सूर्य्यपदेननञोऽसमासेचासूर्य्य
पदस्यदृश्युपपदत्वाभावादसूर्य्यललाटयोर्दृशित
पोरितिखश्प्रत्ययानुशासन विषयत्वमसूर्य्यम्प
श्याइत्यत्रप्रयत्नेनोपपादनीयं, नानुयाजेष्वित्य
स्यक्रियाप्रतिषेधपरत्वं वाधकान्तरेणखण्डयतां
मतमुपन्यस्यतियत्त्विति, करणनिषेधनानुयाजे

द्वितिनञोऽनुयाजेषयजामह मन्त्रपाठकरणप्र
तिषेधपरत्वेविकल्पा पत्तेरितियजतिपदार्थासङ्क्षो
चेनयजतिष्वित्यादिनाऽनुयाजेपितन्मन्त्रपाठवि
धानात्तन्निरोधेनैकवाक्यस्या प्रामाण्यापत्तेःअ
तिरात्रेषोडशिग्रहणा ग्रहणयोरिवानुयाजेतन्म
न्त्रपाठतदभावरूपवैकल्पिकाङ्गद्वयस्य विधाय
कतयाविरोधपरिहार सम्भवेपिअनुयाजजन्य
परमापूर्वस्यभावाभावरूपाङ्गद्वय घटितसामग्री
भेदकल्पनेनतत्सामग्रीद्वय प्रयोज्यफलप्रकर्षाप
कर्षकल्पनेनचगौरवापत्तेरित्यर्थः, विशेषानिषेध
इति, तद्धर्म्मन्यूनवृत्तिधर्म्मावच्छिन्नविषयकत
न्निषेधवाक्यसत्वेताद्विधायक वाक्यस्यतद्धर्म्मा
वच्छिन्नार्थकपदस्यानिषेधविधि विषयतावच्छे
दक विशेषरूपावच्छिन्नेतरत्वविशिष्टतद्धर्म्मा
वच्छिन्नपरतायाइत्यर्थः ब्राह्मणोभ्यइति,तत्रब्रा
ह्मपदस्याविरोधवारणायकौण्डिन्येतरब्राह्मणप
रत्वादितिभावःतत्रापि, ब्राह्मणेभ्यइत्यादावपि
कौन्डिन्येति, ब्राह्मणान्वयीकौन्डिन्यभेदोनकौ
न्डिन्यायेत्येतत्प्रतिपाद्यइत्यर्थः तथाचब्राह्मण
पदस्यनविशेषेतरपरतेत्यर्थः विरुद्धैकवचनाक

च्छत्वादिति, कौण्डिन्यपदस्यानुयोगिवाचकब्रा
ह्मणपदोत्तरचतुर्थीवहुबचन विजातीयतदेक
बचनान्तत्वादित्यर्थः तथाचानुयोगिप्रतियोगि
वाचकपदयोर्विरुद्धवचनराहित्याभावेन नञात
दनुयोगिकतत्प्रतियोगिकभेदबोधोन सम्भव
तीतिभावः, ननुविरुद्धवचनावरुद्धत्वेपिविभ
क्तिविभाजकप्रथमात्वादिनाविजातीय विभ
क्तिराहित्यमक्षतमेवेतिनब्राह्मणपदार्थे कौण्डि
न्यपदार्थ भेदबोधानुपपत्तिरित्यतआहनखल्वि
ति,इत्यत्रापिराजानिमहद्भेद भेदौप्रतीयेतइत्य
नेनास्यसम्बन्धः इत्यत्रैवेति,व्यतिरेकदृष्टान्तः,
तथाचयथामहतोराज्ञइत्यत्रराजानिमहद भेदः
नमहतोराज्ञइत्यत्रराजानिमहद्भेदः प्रतीयतेत
थामहतांराज्ञइत्यत्रराजानिमहदभेदः नमहतां
राज्ञइत्यत्रराजनिमहद्भेदोनप्रतीयतइत्यर्थः त
थाचवचनसाम्यमापिभेदाभेदबोधेअपेक्षित मि
तिभावः एकोनद्वावित्यत्रैवेति,यथैकोनद्वावित्य
त्रानुयोगिप्रतियोगिवाचकैकद्वया दिपदयोर्वि
रुद्धवचनावरुद्धत्वेपिसमान विभक्तिकतामात्रे
णभेदबोधस्तथेत्यर्थः, कथञ्चित्समर्थनेपीति,क

धाश्चिदुक्तस्थलेभेदबोधसमर्थनेपीत्यर्थः द्विश
ब्दस्यानित्यद्विवचनान्तता कौन्डिन्यादिशब्द
स्यचनित्यैकवचनान्तताएतादृशविशेषस्सत्वे
प्यनुयोगिप्रतियोगिनो र्विरुद्धसंख्यायाश्चवि
वक्षास्थलएव विरुद्धवचनावरुद्धत्वंभेदबोधवि
रोधीत्युपगमेनप्रकृतस्थले विरुद्धसंख्याविवक्षै
कोनद्वाविसेतत्साम्यामित्याशयेनकथंचि दित्यु
क्तं, कौन्डिन्यस्यानेकत्वेपितद्गतजातावेकत्व
विवक्षयापरम्परयातद्विशेषणत्वेनैकत्व संख्या
विवक्षासम्भवोबोध्यः, द्वितीयस्य.द्वितीयाक्रि
यापदस्य, अनन्वयप्रसंगात्,ब्राह्मणोकौन्डिन्य
भेदान्वयपक्षेऽनन्वितार्थ कत्वप्रसङ्गात्,एकत्र
प्येक्रियापदद्वयप्रयोगाभावादितिभावः, अ
तएवेति, विशेषनिषेधस्थलेविधिवाक्यस्यसा
मान्यशब्दस्य विशेषेतरपरतायाव्युत्पन्नत्वादे
वेत्यर्थःकरणनिषेधेपीति, कुर्वीतेतिक्रियावैय
र्थ्यप्रसङ्गेनामावस्यायांपितृभ्योदद्या दित्यादि
विधिस्यपदबोध्यामावास्यादिकालेनरात्रि त्वि
त्यनेनरात्रिभेदबोधस्वीकारा सम्भवादगत्यावा
क्यभेदोपगमेनरात्रौश्राद्धकरण निषेधपरत्वेपि,

स्यर्थःनद्विकल्पावकाशः,अमावास्यादिरात्रिभिन्ना
द्धकरणे विधिनिषेधवाक्ययोर्विरुद्धसफलत्व
निष्फलत्वबोधकत्वेनैकवाक्यस्याप्रामाण्यप्र
सङ्गः, अमावास्यादिपदार्थैरात्रिभेदस्यनरात्रा
वित्येतदर्थस्यानन्वयेप्यमावस्यादिपदस्य रात्रि
भिन्नामावास्याद्यर्थ कतयारात्रेःश्राद्धकरणादि
ष्वविषयत्वादितिभावः अमावस्यापदशक्तिप
देनोपाधिविशेषावच्छिन्नमहाकालपरे, महाका
लस्यैक्येनामावस्यायां रात्रिभिन्नत्वस्यबाधप्र
सङ्गात् अपितुकालोपाधिविशेषपरे,कालोपाधी
नामप्याधारत्वोपगमान्नाधारसप्तम्यनुपपत्तिःव
नेसिंहनाद इतिवदवच्छेदकत्वमेवचासप्तम्यर्थः
अमावस्यादिरूपकालोपाधयश्चनषष्ठिदण्डाद्यव
स्थायीन्यषण्डवस्त्वन्तराणि तथासत्यमावस्या
रात्र्योर्भेदनियमेनतत्तद्भेदस्याव्यावर्तकताप्र
सङ्गात्किन्तुअमावस्यापदंचरमोत्पन्नकलारम्भ
कसंयोगनाशानुगुण क्रियाकलापपरं,परम्परया
तत्कलारम्भकद्व्यणुकपर्य्यन्त जनकसंयोगाना
मपेतदारम्भकत्वंतादृश क्रियाकलापान्तर्गता
नुजकाद्येकलावयवक्रिया रात्रिरूपायतोह

श्यदेशविशेषावच्छिन्नादृश्यदेशविशेषानवच्छि
न्नावासूर्य्यक्रियानरात्रिपदार्थः अपितुदृश्यदेशवृ
त्तित्वविशिष्टसूर्य्यानधिकरणकालएव, तच्चक
लावयवक्रियाविशेषसाधारणं अथामावस्याका
लावच्छिन्नस्याधिकार्य्यात्मनिष्ठश्राद्धकरणाभा
वस्यप्रत्यवायजनकत्वेऽमावास्यान्तर्गतभागवि
शेषेश्राद्धकर्त्तर्य्यपितदन्यभागेश्राद्धकरणाभाव
सत्वात्प्रत्यवायप्रसङ्गः नचैतदतिप्रसङ्गवारणायत
त्तावत्क्रियास्थायिवस्त्वन्तरमखण्डममावस्याप
दार्थःप्रवेश्यः नतुक्रियाविशेषाः, तादृशक्रियारू
पामावस्या वच्छिन्नश्राद्धकरणाभावस्योक्तस्थ
लसाधारण्यात् यद्यपि दर्शितस्थलेप्यवान्तरका
लावच्छिन्नाखण्डामावस्याकालस्यकर्तृनिष्ठश्रा
द्धकरणाभावस्यावच्छेदकतयातादृशकाला व
च्छिन्नत्वस्याभाव विशेषणत्वेप्यतिप्रसङ्गोदुर्वारः
तथापितादृशामावस्या निष्ठावच्छेदकतायाम
नवच्छिन्नत्वानिवेशनैतन्मते प्रतीकारसम्भव
इतिवाच्यममावस्यायां पितृभ्योदद्यादितिनि
त्यविधेः प्रत्यवायपरिहाररूपेष्टसाधनताबोध
कतयाअर्थतएतद्विधिविषयामावस्या पदार्थ

कालेश्राद्धकरणाभावेप्रत्यवायसाधनत्व बोधा
द्विधावमावस्यापदस्य क्रियाकलापार्थकत्वप्र
त्यवायजनकतावच्छेदकगर्भे अखण्डवस्त्वन्त
ररूपामावस्यापदार्थान्तर निवेशासम्भवादिति
चेत् सत्यंतर्हिअमावस्यायामित्यादिविधौता
त्कालस्थायिवस्त्वन्तराणयमावस्यापदार्थःनिषे
धविधिस्थरात्रिपदंतादृशाम।वस्या साधारण
देशविशेषावच्छिन्नसूर्य्यक्रिया विशिष्टकालत्वा
वच्छिन्नपरं, तद्विशेषणविशिष्टेचकालेश्राद्धनि
षेधमाहिम्नाचतादृशविशेषण विशिष्टवैधर्म्म्यवि
शिष्टअखन्डामावास्या पदार्थेश्राद्धकरणंप्रती
यते विशिष्टवैधर्म्म्यंविशिष्टावृत्तिधर्म्मस्तद्विशे
षणवैशिष्ट्यंयत्रधर्म्मिणितत्रापितद्वैशिष्ट्य वि
रहदशायांतद्विशिष्टा वृत्तिधर्म्मवैशिष्ट्यमक्षतमे
व अतएवब्राह्मणायदीयतांअशौचिनेनदातव्य
मित्यतोभेदस्यव्याप्यवृत्तितानियमेनशुचेरपिक
दाचिदशुचितयातत्राशौच विशिष्टभेदासत्वेपि
शौचकालेतस्मैदानं प्रतीयतेभेदस्याव्याप्यवृ
त्तितामतेविशिष्टभेदप्रतीतिरवापेयते, ननुवि
शेषनिषेधस्थले सामान्यविधिस्थसामान्यश

ब्दस्याविशेषेतरसामान्य लाक्षणिकत्वाभावे
पिरात्रौ श्राद्धन्नकुर्वीतेत्यादौनाविकल्पावकाशः
नरात्रावित्यत्रनानुयाजेष्वितिवन्नञो भेदा
र्थकतयारात्रि भिन्नकालेकुर्वीतेत्यर्थकत्वेनक्रि
यानिषेधत्वाभावादित्या शङ्कान्निराकरोतिन
हीति, तत्रापि,नरात्रावित्यत्रापि,रात्रीतरपरते
ति, नञ्पदस्यरात्रीतरत्वार्थकतेत्यर्थःनतुनिषे
धार्थकतेतिशेषः रात्रिभिन्नइति, अमावास्या
यामित्यादिवत्नरात्राबित्यादेः रात्रिभिन्नका
केपृथक् श्राद्धविधायकत्वेप्यमावास्यायामित्या
दिविधावमावास्यापदार्थ स्यासंकोचेनततोरा
त्रिसाधारण्येनश्राद्धकरण लाभादमावास्यादि
रात्रौश्राद्धानुष्ठानप्रसङ्गस्यदुर्वारत्बादित्यर्थः इ
दमुपलक्षणंरात्रिभिन्नेकुर्वीतेति विधिवलात्
सर्वतिथिष्वेवश्राद्धानुष्ठानस्य दुर्वारतापिवो
ध्या, नचायंनश्राद्धान्तरविधिःअपितुअमावा
स्यादिविहितश्राद्धरात्रिभिन्नकाल विधिरेव
अतोनायमतिप्रसङ्ग इतिवाच्यममावास्याया
मित्यादितएव काललाभेनकालाकाङ्क्षानिवृ
त्त्यातत्प्राप्तश्राद्धेकालविधानासम्भवात्विक

श्येनकालविधानेउक्तातिप्रसङ्गानिवृत्तेःननुश्रा
द्धनिमित्ततयाप्राप्तेऽमावास्यादिकालेभागवि
शेषाकाङ्क्षयाश्राद्धप्रयोजकत्वेनरात्रिभिन्नत्व
विधिरयमित्यतोनामावास्यादिरात्रौनवाऽमावा
स्यादिभिन्नदिवसे श्राद्धानुष्ठानप्रसङ्गइत्याशं
क्यश्रमावस्यायामित्यादिविधिस्थामावास्यादि
पदात् प्रतीयमानेऽमावास्यादौरात्रिभेदस्यान्व
यंविनानतत्सम्भवः नरात्रावित्यादिवाक्यस्थ
स्यकुर्वीतेत्यस्यवैयर्थ्येनामावास्यायांपितृभ्योद
द्यादित्यादिना क्रियान्तरघटितवाक्येनसहतदे
कवाक्यताकल्पनञ्चनयुज्यतइतिकथंतत्रतस्या
न्वयः तद्वाक्यस्थस्यकुर्वीतेत्यस्यसार्थकतोपग
मेच श्रमावस्यायामित्यादिवाक्यस्थदद्यादित्या
दि क्रियानर्थक्यंक्रियारहितञ्चामावास्यादिश्रा
द्धकाल बोधकंवाक्यान्तरन्नास्तियदुपस्थितका
लेनरात्रावित्येतदुपस्थितरात्रिभेदान्वयेनश्राद्धं
कुर्वीतेत्येतद्भागबोध्यश्राद्धकरणान्वयेनचसाम
ञ्जस्यंस्यादित्याहनखल्विति, श्राद्धविधायकं,श्रा
द्धकालबोधकं,इदं,रात्रौश्राद्धंनकुर्वीतेतिवाक्यं,
एकवाक्यतामासादयेदिति,तादृशक्रियारहितवा

र्थेनसममस्यैकवाक्यत्वं तद्वाक्यस्थ क्रियायाः
अन्वयात् तादृशवाक्ये च क्रियाविरहात् क्रियावै
यर्थ्यानवकाशादितिभावः नरात्राविंत्यत्रचेत्क्रि
यानिर्देशोनस्यात्तदा क्रियाघटितामावस्यादि
कालबोधकवाक्येनैकवाक्यतयैवसा सङ्गस्यं
वेत्तदपिनेत्याह नापीदमिति, नानुयाजेष्वितिव
दिति, नानुयाजेष्वितिवाक्यंयथा क्रियान्तररहि
तमित्यर्थः एतेन क्रियावैयर्थ्यप्रसक्त्या नानुयाजे
ष्युयजतिष्वित्यनयोरेकवाक्यता सम्भवइतिद
र्शितं, नचात्रक्रियायाअसत्वेप्यमावस्यायामि
त्यादिनाऽस्यैकवाक्यत्वेअष्टका दिविध्येकवा
क्यत्वासम्भवादष्टकादिश्राद्धस्यरात्राव नुष्ठानप्र
सङ्ग इतिक्रियाराहित्याभिधानमसङ्गतमितिवा
च्यमेकपदोपस्थापितस्यानेकवाक्यार्थ प्रवेशे
वाक विरहेणामावास्याश्राद्धविधायकवाक्यार्थ
इवाष्टकादिविध्यर्थे पिनरात्रावित्यर्थरात्रिभेदप्र
वेशसम्भवात् अमावस्याष्टकादिबोधकतत्तद्वि
धिस्थपदानांमत्रन्मतेपिलक्षणो पस्थापितरा
त्रिभेदविशिष्टतत्तत्पदार्थ परतयाश्राद्धकत्व.
प्र अस्मन्मतेपिनरात्राविंत्येतदर्थरात्रिभेदवि

श्चिद्दृश्यार्थपरत्वकल्पनसम्भवात् संसर्गाभावस्य
प्रत्यक्षइवशाब्दबोधेपिधर्म्मिणिप्रतियोगिसंस
र्गधीर्हेतुरित्यभिमानेनशङ्कते अथेति, रात्रौश्रा
द्धस्याप्रसक्तात्रिति, अमावास्यायामित्यादिविधा
वमावस्यादिपदस्यसङ्कोचे निषेधानुपपत्त्यात
त्सङ्कोचेनविधितःरात्रिश्राद्धकरणे सफलताबो
धोपगमइत्यर्थःविकल्पापत्ति,विरुद्धार्थकयोर्वि
धि निषेधवाक्ययोरेकतराप्रामाण्यप्रसङ्गः,अप्र
सक्ताविति, विकल्पभयेनामावास्यादिपदस
ङ्कोचेन विधेरात्रिश्राद्धकरणेसफलताबोधकत्वा
नुपगमइत्यर्थःकथंनिषेधः, कथन्नरात्राविति
वाक्याद्रात्रिश्राद्धकरणेनिष्फलत्वबोधः,प्रसक्तं
हिप्रतिषिध्यतइति, तद्धर्म्मिसंसृष्टतयाज्ञातमेव
तद्धर्म्मिनिष्ठाभावप्रतियोगितयाज्ञायत इत्यर्थः
प्रत्यक्षएवप्रतियोग्यारोपस्यनहेतुत्वंकुतः शाब्द
बोधेतद्धेतुत्वमित्याशयेनतद्धेतुतामानुपह
सतिसाधीयानिति, अयंमन्त्रपाठःमन्त्रपाठत्
ल्यतयाऽभ्युपगतःप्रसक्तंहीत्यादिप्रवादः,यद्बलात्,
शब्दप्रवादबलात्,वहिप्रसक्तिरिति,जलह्रदादिस्थ
ले उपादीयते,अपेक्षणीयतयोपेयते,ननुयत्रानि

षेधवाक्यंविनाक्रियायांप्रवृत्तिः प्रसज्यतेतत्रैव
तद्वाक्यसार्थक्यंविधिवाक्यस्यप्र वृत्तिफलकत्व
वन्निषेधवाक्यस्याप्रवृत्तिफलकत्वात् एवञ्चवि
धावमावास्यादिपदस्यरात्रीतरपरत्वेरात्रौ श्राद्ध
स्याविध्य विषयतयातत्राप्रवृत्तिनिर्वाहेनरात्राविति
तिवाक्यंव्यर्थमेवस्यात्नचनान्तरी क्षेऽग्निश्चेत
व्यइतिवेदोयथानिष्फलः वेद्यामग्निचयनविधा
नादन्तरीक्षेऽग्निचयनेऽविधानादेवा प्रवृत्त्युपप
त्तेस्तथारात्रौश्राद्धमित्यादिरपिनिष्फल एवभव
त्वितिवाच्यंसफलत्वे सम्भवतिनिष्फलत्वानौचि
त्यात् अगत्यानान्तरीक्षइत्यादेस्तथात्वोपगमा
त् प्रकृतेतुक्रियापदवैयर्थ्यमुपगम्याविधिस्थामा
वास्यादिपदेनरात्राविल्यस्यैकवाक्यतया तत्सा
र्थकतोपपादनस्योचितत्वात्,एतेनपर्य्युदासपक्षे
नञोभेदरूपमुख्यार्थ परतानसम्भवतिनञोपि
प्रातिपदिकतयाप्रातिपदिकार्थयोर्भेदेननान्वय
इतिव्युत्पत्तौनिपातभेद निवेशगौरवेणतद्विरो
धादमावास्यादिपदार्थभेदस्यान्वया सम्भवाद
तोभेदवातलक्षणैवोपगन्तव्याश्रयुक्तश्च मुख्या
र्थपरित्यागइतिप्रकृते निषधपरतैवनञइत्यापि

निरस्तंतद्वाक्यसार्थ क्यानुरोधेनलक्षणोपगमौ
चित्यात्प्रातिपदिकार्थेनैवधात्वर्थे नापिप्रातिप
दिकार्थस्यभेदेनानन्वयात्नञः प्रतिषेधपरत्वप
क्षेपिनकुर्वीतेत्यत्रधात्वर्थ श्राद्धकरणेनञाइष्टसा
धनत्वाभावबोधकत्वासम्भवात् अभेदान्वयानु
रोधेनतस्याभाववतिलक्षणाया आवश्यकत्वा
च्च,प्रसक्तंहिप्रतिषिध्यतइतिप्रवादस्यापियत्रनिषे
धंविनातत्तत्क्रियायांप्रवृत्ति प्रसक्तिस्तत्रैवनिषे
धसाफल्यमित्येवार्थः यत्तुप्रतिषेधपक्षेपिविधि
स्थामावास्यादिपदंनरात्र्यतरपरंयेन निषेधं
विनापिरात्रिश्राद्धेप्रवृत्ति प्रसक्तिर्नस्यादिति
निषेधवैयर्थ्यंस्यात् नचैवंसतिविकल्पोपि,निषेध
विरोधेनसामान्यशास्त्रस्य रात्रिशाद्धांशेसफ
लत्वसंसर्गबोधानुपगमात् नचतथासतिकथंप्र
वृत्तिप्रसक्ति रितिवाच्यमसंसर्गाग्रहप्रवर्त्तक
तामतेसंसर्गाग्रहेपिप्रवृत्तिप्रसक्तेः नचसामान्य
शास्त्रस्यप्रवर्तकासंसर्गाग्रहसाहित धर्म्मधर्म्मि
ज्ञानरूपभ्रमजनकत्वेतद्विरोधेननिषेधवाक्येना
संसर्गग्रहजननासम्भवान्निषेधस्यापिकथन्निवृ
त्तकतेतिवाच्यन्निषेधवाक्यस्यसामान्यशास्त्र

पेक्षयाबलीयसः संसर्गाविषयकत्वरूपभ्रमत्व
कल्पकतयाप्रवृत्तिविरोधित्वात् अतएवबलीय
सादुर्बलंबाध्यत इतिन्यायाद्रागतःप्रवृत्तिप्रस
क्तिविषयेऽगम्यागमनादौ निषेधवाक्यस्यब
लीयसोलौकिकमानबाधकतया निबर्त्तकत्वमे
वनतुबिकल्पः एवंपशुयागेआधाराद्यभागाङ्क
कयागतुल्यताबोधकातिदेशप्राप्ताधाराद्य भा
गानिषेधकस्यनतौपशौ करोतीतिबाक्यस्याधा
राद्यभागनिवर्तकत्वे पिअतिदेशबाधएवनतुबि
कल्पः षोडाशिग्रहणाग्रहणवाक्ययोस्तुल्यबल
तयाबाध्यबाधकभावसम्भवा द्विकल्पइति,तन्न
सामान्यशास्त्रस्यैवोप जीव्यतयाबलवत्त्वेनबा
धायोगाद्विकल्पभयेनपर्य्युदास पक्षावलम्बन
स्ययुक्तत्वादित्याशयेनाहनिषेधेति, निषेधबोध
कवाक्येत्यर्थः तात्पर्य्यानवबोधेति, निषेधवा
क्यासत्वेविधिवाक्यस्थामावास्यादि पदस्य
रात्रीतरामावस्यादिपरत्वग्राहक प्रमाणाभावे
नरात्रिश्राद्धेपीष्टसाधनतायाः सामान्यपरतया
ग्रहीता मावस्यादिपदघटितबाक्येनबोधनस
म्भवाद्रात्रिश्राद्धेप्रवृत्तिप्रसक्त्याथातत्प्रवृत्तिवा

ङ्गता,नातिरात्रइति वाक्यस्यप्रकृतेरात्रिश्राद्धक
रणइवातिरात्रषोडशिग्रहणे इष्टसाधनत्वाभावा
र्थकत्वेतदभावस्यनातिरात्राङ्गतानिर्वहतिग्रहण
विधिनातत्रेष्टसाधनतावोधादेकतराप्रामाण्यञ्च
स्यादितिप्रकृताद्विशेषमाह अत्रचेति,अत्र,नाति
रात्रइत्यादिवाक्ये,ग्रहणविधिवोधादिति,ग्रहण
विध्यर्थविरुद्धार्थकताप्रसङ्गादित्यर्थः तथाचाव
रुद्धार्थकवाक्यद्वयस्य प्रामाण्यानुपपत्त्यैकवा
क्यस्याप्रामाण्यंस्यात्नचवेद वाक्यमप्रमाणी
भवितुमर्हतीतिभावः इष्टसाधनमितीति,अर्थ
इत्यनुषज्यतेइष्टञ्चा तिरात्रजन्यंपरमापूर्वं,
नतुतज्जन्यंप्रधानफलं,अङ्गताविरोधात्तदीयप्र
धानफलाजनकत्वस्यतदङ्गताघट कत्वादि
त्यग्रेव्यक्तीभविष्यति, नन्वेवंविधिप्रत्ययार्थेष्ट
साधनत्वस्याक्रियानन्वयित्वेन प्रकृत्यर्थान्विते
तिव्युत्पत्तिविरोधइत्याशंक्यनञर्थद्वारा प्रकृ
त्यर्थान्वयित्वेननताद्दशव्युत्पत्तिभङ्ग इत्याह
व्युत्पन्नश्चेति, धात्वर्थस्याभावेपीति,प्रतियोगि
तयाधात्वर्थान्वितेनञर्थाभावेपीत्यर्थः,विभक्त्य
र्थान्वयःतिङर्थस्यान्वयः, गुरवः,प्राभाकरा,इत्य

र्थमाहुरित्यनेनास्यसम्बन्धः कलञ्जभक्षणाभाव
विषयकंकार्य्यमितीति,एतादृशार्थ भानेतन्मत
सिद्धविध्यर्थकार्य्यस्यभक्षणान्वितेननञर्थाभावे
न सहान्वयादतएवेत्युपष्टम्भसङ्गतिः नञ्सम
भिव्याहृताविधिप्रत्ययेनक्वचिदभावेआश्रयता
सम्बन्धेनेष्टसाधनत्वंप्रत्याय्यतेयथानातिरात्
इत्यादौ, क्वचिच्चतत्प्रतियोगितयातत्प्रत्याय्य
ते यथारात्रौश्राद्धन्नकुर्वीतेत्यादौ, इत्यत्राकि
न्नियामकमित्याकाङ्क्षायामाहानियमास्त्वि
ति,तात्पर्य्यादीत्यादिनायोग्यतापरिग्रहः रात्रौ
श्राद्धन्नकुर्वीतेत्यत्ररात्रिश्राद्धकरणाभावस्यफ
लजन कत्वाभावएवतात्पर्य्यंकल्प्यतेनातिरा
त्रइत्यादावति रात्रिषोडशिग्रहणस्येष्टसाधनता
याग्रहणविधिनाबोधनात्तत्रतदभावबाधनतद
भावस्येष्टसाधनत्वएवतात्पर्य्यमितिभावः नन्व
ङ्गविधिभिःकथमिष्टसाधनत्वंबोधनीयं फलवत्स
न्निधावफलमङ्गमित्यङ्गलक्षणेनाङ्गानान्निष्फल
त्वावगमादित्याशङ्कामङ्गलक्षणेफलसामान्या
भावरूपाफलत्वानिवेशाभिमान विजृम्भितां
निराकुरुतेमुख्येति, अङ्गलक्षणेऽफलपदस्यमु

ख्यफलाजनकार्थकतयाताद्दशाफलत्वसत्वेपि परमापूर्वं रूपफलजनकत्वबोधनाविरोधादित्य र्थः अन्यथाऽङ्गेप्रवृत्त्यनुपपत्तेरिति, अतएवया गेरागादङ्गे वैधीतिप्रवादोपीतिभावः इष्टप्रयो जकत्वरूपेष्टसाधनत्वस्याविध्यर्थत्वेप्रधानफल रूपेष्टसाधनता बोधनमप्यविरुद्धमितिबोध्यं, ननुषोडशि ग्रहणंविनापितदभावाङ्गकातिरा त्रात्परमापूर्वसम्भवेषोडशिग्रहणेपरमापूर्वरूपेष्ट साधनताबोधेपिप्रवृत्त्यनुपपत्तिःतज्जन्यश्रमादौ बलवद्द्वेषसम्भवादित्याशङ्कांफलभूमानसम्यु पेत्यसमाधत्तेगृहणविध्यन्यथानुपपत्त्येति, गृहण विधेःप्रवृत्तिपरत्वान्यथानुपपत्त्येत्यर्थः अतिश यितं, अतिशयरूपजातिविशेषवत्, प्रधानफला तिशयविरहेस्वतोऽसुन्दरपरमापूर्वेअतिशय रूप जातिविशेषस्वीकारेपितत्रोत्कटरागासम्भवेनषो डशिगृहणजन्यश्रमादौबलवद्द्वेषइत्यतःप्रधा नफलप्रकर्षस्यापिकल्पनामाहतस्माच्चेति, अति शयितपरमापूर्वाच्चेत्यर्थः फलं, अतिरात्रप्रधान फलं,कल्प्यतइति, तथाचताद्दशफलेउत्कटरा गात्तज्जनकातिशयितापूर्वेप्युत्कट रागादयेनत

ज्जनकातिशयितापूर्वैप्युत्कटरागोदयेन षोड
शिग्रहणजन्य श्रमादौबलवद्द्वेषतिरस्कारे
णतत्प्रवृत्तिनिर्वाहइतिभावः अत्रचवाकारास
त्त्वेपिविकल्पनिर्वाहः तथाहिययोःकल्पयोरन्या
न्यजन्यफलविरोधिता तयोरेवाविरुद्धकल्परूप
विकल्पताब्रीहियवाद्योस्स मुच्चितयोरपिफलज
नकत्वसम्भवेनतत्र तन्निराकरणायतयोः फ
लजननेपरस्पराभावसहकारिताप्रमाण माव
श्यकंतच्चवाकारंविनानसम्भवतीतिवाकारा पे
क्षाअतोयत्रयवैर्य्यजेतेत्यादौवाकारोनश्रूयतेतत्रा
पिसङ्कल्प्यतेअत्रचकल्पयोर्भावा भावरूपतया
जोविरोधनमिलनासम्भवादेकस्यापरकारण प्र
तिक्षेपकतयाऽन्योन्यफल विरोधितायाअर्थ
तोलाभान्नवाकारापेक्षा, अथब्रीहियवविकल्प
स्थलेवाकारेणयागरूपकार्य्येब्रीहियवयोः पर
स्पराभावसाहित्येन कारणताप्रत्यायनासम्भ
वः एकस्यापियागस्यदेवतोद्देश्यकत्यागरूप
स्यत्यागविषयपुरोडाशरूपद्रव्य निष्पत्तिद्वा
राब्रीहियवोभयसाध्यतासम्भवात्नच स्वर्गं
म्प्रतिब्रीहियागयवयागयोः परस्पराभावसा

हित्येनकारणतावाकारवशात्प्रतीयतइत्यपि स
म्यक्तथासतिव्रीहियागयवयागयोरेव विरू
द्धकल्पद्वयरूपतया क्रमेणयागद्वयकर्तुःस्वर्गा
नुत्पादप्रसङ्गात् यवैर्यजेतेत्यस्यप्राप्तयागकरणी
भूतव्रीहिरूपद्रव्यलाभेनद्रव्याकाङ्क्षानिवृत्ता
वपि विकल्पमुख्याद्रव्याकाङ्क्षयायवरूपद्रव्य
विधायकतायामीमांसकसिद्धान्त सिद्धायाभ
ङ्गप्रसङ्गाच्च, एतेनगुरुमते प्रधानविधेरपियाग
जन्यत्वेनापूर्वबोधकतया अपूर्वस्प्रत्येवव्रीहिय
वयागयोः परस्पराभावसाहित्येनकारणतावा
कारसमभिव्याहारवशात्प्रतीयते एकेनचैकदा
यागद्वयानुष्ठानासम्भवः क्रमेणयागद्वयानुष्ठा
नस्थलेचैकदातयोरसत्वेनक्रमेणा पूर्वद्वयोत्पत्तौ
बाधकाभावःअपूर्वेयागस्यसाक्षात्कारणतावत्
साक्षादेवप्रतिबन्धकत्वादित्यपिनिरस्तं, विधि
प्रत्ययस्यापूर्व वाचकत्ववादिनैयायिकमतेऽपू
र्वयागयोर्वैकल्पिककारणताया विधिवाक्यतो
ऽप्रतीतेश्चएवंवाकारेणाकरणयोर्व्रीहियवयोः प
रस्परासमवहितत्वमात्रं प्रत्याय्यतेदण्डाच्चक्रा
द्वाघटइत्याद्यप्रयोगात् व्रीह्यसमवहितयवस्य

करणत्वलाभादेवञ्चव्रीह्य समवधानेकथंयागइ
त्याकारायायवाबेघ्युत्थापकाकाङ्क्षायाः शा
न्तिः नतुपरस्पराभावसहकृतत्वम्बार्थःतृणाइ
रणेर्वाबह्निर्जायतइत्यादिप्रयोगसत्वात् नहि
तृणादिभिः परस्पराभावसहकारेणवह्न्यादि
कार्य्यंजन्यनेमिलि तादपिदाहशकार्य्योत्पत्तेः
तथाचकथंव्रीहियवयोर्मिलितयोर शास्त्रार्थत
तिचेतुसत्यंव्रीहिभिर्यवैर्वायजेतेत्यतो व्रीहिकरण
कत्वयवकरणकत्वयोर्याग विशेषणयोर्यागनिष्ठ
इष्टसाधनतावच्छेदकं प्रतीयतएकविशिष्टेऽपरवै
शिष्ट्यबोधकशब्दस्यधर्म्मि विशेषणविशेषणा
न्तरावच्छेदकत्वबोधकताया अपिव्युत्पत्तिसि
द्धत्वात्औत्सर्गिके विशिष्टान्वयसम्भवातिचे
मलाच्छितान्वयतात्पर्य्याकल्पनात् एवञ्चव्रीहि
करणकत्वयवकरणकत्वयोः कल्पयोर्यागनिष्ठ
स्वर्गोत्पादकतावच्छेदकत्वरूपस्वर्गप्रयोजकं
विधायकं तादृशवाक्यद्वयंतयोस्तत्प्रयोजकत्व
ञ्चमिलितयोःएककरणकत्वान्वयित्वामा
लमानेयागेऽन्यकरणकत्वाभावस्य बाधकस्या
बाधनात्तस्या अपिस्वर्गसाधनत्वान्वयियागे

विशेषणतया तुल्यन्यायेनैककरणकत्वप्रयोज्य स्वर्गेऽपरकरणकत्वाभावस्य प्रयोजकत्वलाभा त्उभतः कल्पयोर्विरोधेनविकल्पतावाकारकल्प नव्रीजश्चव्रीह्यकरकरणकः स्वर्गसाधनव्रीहिया गजातीययागः किंद्रव्यकरणकइत्येताद्दशीवि कल्पमुख्याकाङ्क्षाव्रीह्य करणकत्वविशिष्टकर णान्तराकाङ्क्षायास्तद्विशिष्ट करणान्तरलाभ नैवनिवृत्तेः तद्विशिष्टकरणान्तरबोधस्यतद्बोध कत्वाकारमन्तरेणानुपपत्तेः तृणादरणेर्वाबह्निः पाकहेतुरित्यादौ प्रमाणवाक्येचैककारणसाध्य त्वान्वयिनिबाकारेणापरसाध्यत्वा भावबाधनेपि तदभावस्यागत्यो पलक्षणतयैव भानेतात्पर्य्य मुपयतेनतुविशेषणतयातद्भाने मिलिताभ्या मपितन्तत्कारणाभ्यांजनितनवह्न्या दिनापा कादिकार्य्यजननस्यप्रामाणिकतयैक साध्यका र्य्येऽपरसाध्यत्वाभाव प्रयोज्यताबाधात्,अथडो यजतिसमिधोयजतीत्यादि विधिबोधितानाम ङ्गानांकथन्न विकल्पतातत्रापिप्रथमाङ्गबोधिता ऽङ्गाकाङ्क्षानिवृत्त्यायबाबिधिवाद्विकल्पमुख्या काङ्क्षयैवविध्यन्तरप्रवृत्तेः विध्यन्तरकल्पना

याश्चावश्यकत्वात्तद्वत्वाच्चैकाङ्गसमव धानाभा
वरूपवाकारार्थविशिष्टस्यैवा पराङ्गस्यपरमापू
र्वसाधनतावगमाद्विशेषणीभूतस्या भावस्यफ
लप्रयोजकतायाश्चावश्यकत्वादितिचेन्नअङ्गानां
यत्रक्रमः श्रुतस्तत्राङ्गविकल्पासम्भवेनसमुच्चि
तानामनेकेषामङ्गत्वदर्शनादेकाङ्ग लाभेपिकिमद
न्यदङ्गमित्यङ्गान्तराकाङ्क्षयैव द्वितीयादिविधी
नांप्रवृत्तिसम्भवेन विकल्पमुख्याकाङ्क्षायास्त
दुत्थापकत्वानुपगमात तथासतिपरस्पराभावसा
पेक्षताकल्पनेनगौरवात् नचैवमग्रभागन्ततस्ते
भ्योदद्यान्मूल्यञ्चजीवतामितिविधिबोधितयोः
परभूम्याधिकरणकश्राद्धाङ्गयोरग्रभागदानमूल्य
दानयोर्विकल्पोनस्यात् विकल्पमुखीमाकाङ्क्षा
मन्तरेणैवोक्ताकाङ्क्षयामूल्यदान विधिसम्भ
वादितिवाच्यंतयोः तद्भूमिस्वामिनस्तस्य हर
न्तिपितरोबलादित्यर्थवादबोधितहरण निवृत्ति
द्वाराश्राद्धाङ्गत्वादग्रभागदानमात्रेण हरणनिवृ
त्तिसम्भवाद्धरण निवर्त्तकतयातल्लाभेहरणनि
वर्त्तकान्तराकाङ्क्षायाअनुदयेन विकल्पमुख्यै
वाकाङ्क्षयामूल्यदानविधिप्रवृत्तेः चकारस्यान्व

कल्पार्थकतायाआवश्यकत्वात् नचतथापितत्रांवि
कल्पानुपपत्तिःयतोऽग्रदानमूल्यदानयोः क्रमेण
विधानोपगमएवप्रथमविधितोऽग्रदानस्यहरण
निर्वर्त्तकत्वलाभेनतन्निवर्त्तकाकाङ्क्षा पूरणा
द्विकल्पः सम्भवेत्तदेवनोपेयतेयुगपत्समुच्चितो
भयदानेबाधकाभावादिति वाच्यमग्रदानमूल्य
दानयोःसम्प्रदानप्रतिनियमेनाग्रदानत्वमूल्यदा
नत्वावच्छिन्नयोः पृथक्सम्प्रदानद्वयानुरोधाद्वा
क्यभेदस्यावश्यकतयायुगपदुभयविधाना स
म्भवात् अथैवंयत्रधवाछिदात्वखदिराछिदात्वावच्छि
न्नयोःपृथक्दात्रकुठाराधिकरणकत्वान्वयेतात्प
र्य्यंतत्रवाक्यभेदेनसामर्थ्य विरहाद्धवखदिरौदा
त्रकुठाराभ्यांछिनत्तीतिप्रयोगानुपपत्तिः समा
सासम्भवादितिचेन्नभवत्येवतथातात्पर्य्येण ता
दृशप्रयोगः यत्रछिदात्वरूपैकधर्म्मावच्छिन्नाया
मेवविभिन्नव्यक्तौयुगपद्धवकर्म्मकत्वदात्रकरणा
कत्वयोः खदिरककर्म्मत्वकुठारकर्म्मकत्वयोश्चा
न्वयेतात्पर्य्यं तत्रैवतथाप्रयोगःप्रकृतेचभूस्वामि
पित्राद्युद्देश्यकत्वविशेष्यता वच्छेदकतापन्नाग्र
भागदानत्वादिनाप्रवृत्तितानिर्वाहाया ग्रभागदान

त्वादिरूपविभिन्नधर्म्मावच्छिन्ने पृथक्सम्प्र
दानान्वयस्यावश्यकतेत्यलमप्रकृताधिकविचा
रेण।भूतलेनघटःभूतलन्नघटइत्यादौप्रतियोग्य
भावयोःप्रतियोग्यनुयोगिभावस्यभूतलन्नघटः
नपचतिचैत्रइत्यादावभावाधारयोराधाराधेयभा
वस्यचसंसर्गतयाभानंनञःप्रातिपदिकत्वेपिप्रा
तिपदिकार्थकयोर्न्नभेदेनसाक्षादन्वयइ तिव्युत्प
त्तौनिपातातिरि क्तत्वस्यप्रातिपादिकविशेषणत
यानानुपपन्नमित्याह प्रतियोग्यभावयोरिति,त
द्विशेषणप्रवेशःप्रयोजनान्तरानुरोधेनाप्यावश्य
कइत्यतआह तत्रवेति,यतोनिपातार्थस्यप्रातिप
दिकान्तरार्थेनसाक्षाद्भेदान्वयोनानुपपन्नः अ
तएवेत्यर्थः इवाद्यर्थान्वयइति,चन्द्रइवमुखमि
त्यादाविवार्थसादृश्य प्रतियोग्यनुयोगिनोश्च
न्द्रमुखयोः प्रतियोगित्वानुयोगित्वभानइत्यर्थः
नषष्ठयाद्यपेक्षेति,प्रतियोगिपदोत्तरंषष्ठयाःअनु
योगिपदोत्तरंसप्तम्याश्चनापेक्षेत्यर्थः तयोःसादृ
श्यरूपनामार्थेनसाक्षादनन्वये प्रतियोगित्वा
देः प्रकारतयाउपगन्तव्यतयातदुपस्थापकष
ष्ठ्यादिविभक्त्यपेक्षास्यादितिभावः नन्वेवम

घटं भूतलमित्यादिबहुव्रीहौ असमो देश इत्यादि नञ्‌तत्पुरुषे च मुख्ययोर्नञर्थयोरत्यन्तान्योन्याभावयोरेवाधारता सम्बन्धेन भूतलदेशादावन्वयसम्भवेन तत्रात्यन्तान्योन्याभाववतो धर्म्मिणो र्नञोलक्षणासर्वसिद्धा नोचितेत्यत आह अघटमिति, सामानाधिकरण्यानुराधादिति, एकधर्म्मिबोधकत्वानुरोधादित्यर्थः अन्यथासमानलिङ्गवचनत्वाद्यनुपपत्तेरित्यर्थः अत्र प्रथमे धर्म्मिणिलक्षणां विनाऽन्यपदार्था बोधकत्वेन बहुव्रीह्यनुपपत्तिः अभावार्थकत्वे चाऽव्ययीभावापत्तिश्च द्रष्टव्या, उक्तव्युत्पत्तौ निपातातिरिक्तत्वविशेषणमप्रान्तिप्यैवषष्ठ्यादिविभक्तिमन्तरेणैव प्रतियोग्यनुयोगिभावादिभानमुपपादयतामतमुपन्यस्यति केचित्त्विति, सुप इति, घटो नास्ती त्यादौ प्रथमाविभक्तेर्न्नानुयाजेष्वित्यादौ सप्तम्यादि विभक्तेरित्यर्थः प्रतियोगित्व इति, आधेयता सम्बन्धेनविशेषणीभवतः प्रकृत्यर्थस्याविशेष्यतया निरूपकतासम्बन्धेनचाभावविशेष णतयाभासमान इत्यादिः, एतच्चस्वामित्वादेः षष्ठ्यर्थतावादिप्राचीनमतानुसारेण, सर्वत्रसप्तम्यन्तेऽग्रिमस्यन्त

चणेत्यस्यसम्बन्धः स्वमतानुसारेणाहअनुयो
गित्वेवेति,निरूप्यत्वसम्बन्धेनविशेषणीभूतः
प्रकृत्यर्थस्यविशेष्यतयाआश्रयतासम्बन्धे नचा
भावविशेषणतयाभासमानइत्यादिःयथास्वामि
त्वादेःषष्ठ्यर्थतामतेनेदंचैत्रस्येत्यादौ निरूपकता
सम्बन्धावच्छिन्नाभाव वोधस्यैवापेक्ष नयातादृ
शसम्बन्धस्यचाभावप्रतियोगितानवच्छेदकत
यासामञ्जस्यंतथाऽत्रघटो नेत्यादौप्रतियोगित्व
स्यसुवर्थतामतेनकाचिदनुपपत्तिः नञर्थाभावा
नुयोगिकप्रतियोगिवाचक पदोत्तरवि भक्त्यर्था
भावस्यनञावोधनात् नेदंचैत्रस्येतिवत्तादृशा
भावतात्पर्य्येणनघटोनेत्यप्रयोगात्,अत्रप्रथम
मतेऽस्वरसोनास्तिपरन्त्वनुयोगित्वस्याप्युक्तस्थ
लेसुवर्थतासम्भवतीतितस्यसुवर्थताकल्पाश्रय
णं,एतावतानञर्थेप्रतियोगिनःसाक्षाद्विशेषण
त्वन्निराकृत्यभूतलन्नघटः नपचतिचैत्रइत्यादौ
नञर्थस्यानुयोगिनिभेदेन साक्षात्तथात्वंनिरा
करोतिनञुत्तरस्यचेति, सुपइत्यनुषज्यते,निपा
तोत्तरविभक्तेर्निरर्थ कतामतानुसारेणाहनञो
वेति, अभावव तिलक्षणेति, तथाचनञर्थेनानु

योगिनोऽभेदान्वयइतिभावः नचानिपातोत्तरंप्र
थमाविभक्तेरेवसर्वलोपगमात्भूतलन्नघटइत्या
दौभूतलादिपदनञ्पदयोः समानविभक्तिकत्वे
पिनानुयाजेषुयजतिष्वित्यादौनञःसप्तम्यन्तता
विरहणयजत्यादिपदसमानविभक्तिकता विर
हान्तदर्थस्याभाववतोयजत्यादावभेदान्वयास
म्भवइतिवाच्यं निपातोन्तरंसर्वविभक्त्युत्पादो
पगमात्अतएवपृथिव्यामेव गन्धइत्यादावेव
कारोन्तरसप्तम्यर्थव्यवच्छेदवोधार्दाधितिकृतैर
भिहितः, नपचतिइदंनराज्ञइत्यत्रप्रतियोग्यनु
योगिभावसंसर्गेणविभक्त्यर्थविशेषितभेदवोधः
कथन्नजायतेकथम्वाभूतलन्नघटइत्या दौनभूत
लादौघटादिसंसर्गाभाववोधः नञर्थसंसर्गा
भावेघटादिपदोत्तरप्रथम याघटादिप्रतियोगि
कत्वस्यनञ्पदोन्तर प्रथमयाचाभावाधारत्व
स्यभूतलादौवोधनसम्भवादित्यतआह विभ
क्त्यर्थेति, विभक्त्यर्थान्योन्याभावस्यसमान
विभक्तिकपदार्थयोः संसर्गाभावस्यचवोधनेन
ञोऽसामर्थ्यमित्यर्थः असामर्थ्यञ्चतादृशप्रति
योग्यनुयोगिवाचकपदाभ्यां नञ्पदसमभि

व्याहारज्ञानस्यता दृशफलानुत्पादकतयात त्तत्कारणत्वानुपगमादितिभावः आहुरित्य स्वरससूचनायसचप्रथमा विभक्तयासंख्याद्य तिरिक्तार्थबोधने तस्याअसाधुतापत्ति रिति इतिमहामहोपाध्याय गदाधरभट्टाचार्य्यकृत नञ्वाद टीका समाप्ता ॥ ❀ ॥ ❀ ॥

संसर्गाभावोऽन्योन्याभावश्चनञोर्थः तत्रचा न्वयितावच्छेदका वच्छिन्नप्रतियोगिताकत्वंव्यु त्पत्तिवललभ्यंनीलघटवतिनघटःनीलोघटोन घटइत्याद्यव्यवहारात् पीतघटवतिननीलोघटः पीतोघटोननीलघटइत्यादिव्यवहाराच्चप्रतियो ग्यभावान्वयौतुल्ययोगक्षेमौतेनयत्पदो पस्था प्यस्यप्रतियोगिनोऽनुयोगिन्याधाराधेयभाव स म्बन्धेनान्वयबोधः तत्रतत्संसर्गाभावस्यापित थायथापचतिचैत्रोनपचातिचैत्रः चैत्रस्येदंनचै त्रस्येत्यादितिङर्थस्यकृत्यादेः प्रथमान्तपदोप स्थापितएवतत्र तथेतितदभावस्यापितथाष ष्ठ्यादेः चैत्रादिनिरूपितंस्वत्वादिकमर्थःनतुत न्निष्ठस्वाम्यादितस्यधनाद्यवृत्तित्वेन चैत्रोयेध नेनेदंचैत्रस्येतिप्रसङ्गात्निरूपकत्वादेश्च संस

र्गस्यप्रतियोगितान बच्छेदकत्वादित्येषादिक्
यत्रचाधाराधेयभावोन संसर्गमर्य्यादयालभ्य
स्तत्रानुयोगिपदेसप्तम्यपेक्षायथाभूतलेघटः भू
तलेनघटइतिसप्तम्यर्थान्विता भावस्यविशेष,
णतयाप्रतियोग्यन्वयइतिकाश्चित् अत्रचतात्प
र्य्यवशात्कदाचिद्भूतलादौघटाद्यभावः कदा
चिच्चघटादौभूतलवृत्तित्वाभावः प्रतीयतेअत
एवपृथिव्यांगन्धोनजल इत्यादौप्रतीतेरेकवि
शेष्यकत्वानुभवः केचित्तुसर्वत्रविशेष्येविशेष
णस्याभावोनञाप्रत्याय्यते अतएवभूतलेघटौ
नस्तः घटानसन्तीत्यादौभूतलेघटोऽस्तीत्यादा
विववचनैक्यनियमइतिप्राहुःतेषांजातौनसत्ते
त्यत्रगतिश्चिन्तनीयाजाति समवेतत्वस्याप्रसि
द्धत्वात् सम्बन्धान्तरेणजातिवृत्तित्वस्यचस
त्तायांसत्वात्,यत्रविशेषणविशेष्ययोरभेदान्व
योव्युत्पन्नस्तत्रान्योन्या भावोनञाबोध्यतेय
थाऽयंघटोनीलोनायंघटोनील इतितत्रचविशेष
णविशेष्यपदयोः समानविभक्तिकत्वंविरुद्धवि
भक्तिकत्वविरहोवातन्त्रंअतएवयजतिषुयेयजा
महङ्करो तिनानुयाजेष्वित्यादावेकवाक्यत्वा

नुरोधात् येयजामहामित्याद्यनुषङ्गगौरवाच्चय
जतिष्वनुयाजभेदो बोध्यतेविशेषणविभक्तिस्तु
प्रयोगसाधुत्वार्थिकानामार्थयोर्भेदेनान्वय बो
धएवप्रकारी भूतविभक्त्यर्थोपस्थितेस्तन्त्रत्वा
त्लाघवेनान्वयबोधमात्रएवतथात्वंविशेषणवि
भक्तिस्त्वभेदार्थिकानीलोत्पलं चित्रगुरित्यादौ
लुप्तविभक्तेरनु सन्धानमितिमतेतुनराज्ञ इत्य
त्रषष्ठ्यर्थस्य सम्बन्धस्यैवात्रापिसप्तम्यर्थाभेद
स्याभावोबोध्यते, यत्तुकरणनिषेधेविकल्पाप
त्तेर्भेदपरतेतितन्नविशेषनिषेधे सामान्यविधेस्त
दितरपरतायाब्राह्मणे भ्योदधिदातव्यंकौण्डि
ल्यायनेदातव्यमितयादौव्युत्पत्तिसिद्धत्वेनावि
कल्पानवकाशात्नचतत्रापि कौण्डिल्यभेदोबो
ध्यः कौण्डिल्यपदस्याविरुद्धैकवचनावरुद्धत्वा
त्नखलुमहतोराज्ञोनमहतोराज्ञ इतयत्रेवमह
तोराज्ञ इतयत्रापिराजनिमहद्भेदभेदौप्रतीये
तेएकोनद्वावित्यादिवत्कथञ्चित्समर्थनेपिद्विती
यस्यदातव्यमितयस्यानन्वयप्रसङ्गाच्च अतएव
रात्रौश्राद्धन्नकुर्वीतेतयादौकरणनिषेधेपिविकल्पा
नवकाशःनहितत्रापिरात्रीतरपरतारात्रिभिन्नेश्रा

द्धविधावप्यमावास्यायांपि तृभ्योदद्यादितथा
दितोरात्रिश्राद्धप्रसक्ते दुर्वारत्वात्नखलुक्रिया
रहितमपिश्राद्धविधायकंवाक्यान्तरास्ति येनेदं
तेनसहैकवाक्यतामासादयेत्नापीदं नानुयाजे
ष्वितिवत्पृथक्क्रियारहितं,अथरात्रौ श्राद्धस्य
प्रसक्तौविकल्पापत्तिरप्राप्तौनिषेधानुपपत्तिः प्र
सक्तंहिप्रतिषिध्यतइतिचेन्नसाधीयानयं मन्त्रपा
ठोयद्वलाज्जलहृदेवह्निर्नास्तीतयादौ शाब्दबोधे
पिपरमप्रयत्नेनतत्रवह्निप्रसक्तिरुपादीयते निषे
धविधिवैयर्थ्यमितिचेत् तात्पर्य्यानिबोधानि
बन्धनरात्रिश्राद्धकरणवारणस्यतदर्थत्वात् ए
कविषयतयापुनरनन्य गतिकतयाषोडशिग्रह
णाग्रहणयोर्विकल्पइति, अत्रचषोडशिग्रहणंने
ष्टसाधनमितयादिकन्नार्थोग्रहण विधिविरोधा
त् अपितुषोडशिग्रहणा भावइष्टसाधनमितथा
दिकं व्युत्पन्नश्च नञ्समभिव्याहृतधात्वर्थस्या
भावेपिविभक्तयर्थान्वयः अतएवप्राभाकराःन
कलञ्जंभक्षयेदितिश्रुतेः कलञ्जभक्षणाभावावि
षयकंकार्य्यमर्थमाहुःनियमस्तुतात्प र्य्यवशात्
मुख्यफलाजनकत्वापिचाङ्गस्यपरमा पूर्वरूपेष्ट

साधनत्वमविरुद्ध
षोडशिग्रहणादतिशाय
शयितंमुख्यफलमितिकल्प्य
प्रतियोग्यभावयोः प्रतियोग्यनु
वाधिकरणयोराधराधेयभावः सम्ब
भासतेनिपातातिरिक्तस्थलएव प्रातिप
योर्भेदेनान्वयेप्रकारीभूतविभक्त्यर्थोपस्थि
त्तेरत्वात्अतएवेवथान्वयेनषष्ट्याद्यपेक्षाअघटं
भूतलमसम्भोदेशइत्यादौस मासेसामानाधिक
रणयानुरोधान्नञोऽभाववत्परता,केचित्तुप्रति
योगिपदोत्तरस्यसुपः प्रतियोगित्वेअनुयोगि
त्वेवानञुत्तरस्याधिकरणत्वेनञोवाऽभाववति
लक्षणाविभक्त्यर्थानुयोगिसमानविभक्तिकार्थ
योरन्योन्याभावसंसर्गाभावबोधनेनञोऽसाम
र्थ्यं तेननपचतिनराज्ञइत्यादौक्तत्यादेरन्यो
न्याभावोभूतलन्नघटइत्यादौ घटादेस्संसर्गा
भावोनप्रतीयतइत्याहुरिति इतिमहामहोपा
ध्यायरघुनाथशिरोमणिभट्टाचार्य्य कृतनञ्
वादः समाप्तः ॥